॥ श्रीः ॥

॥ साम्बाय नमः ॥

# ॥ संस्कृतप्रवेशिनी ॥

महीशूरपुरीश्रीमन्महाराजसंस्कृत-
पाठशालाद्वैतवेदान्ताध्यापकेन

**जी. रामस्वामिशास्त्रिणा**

गीर्वाणभाषाव्युत्पित्सूनां
बालानामुपयोगाय
विरचिता ।



**श्रीरङ्गस्थ
श्रीवाणीविलासमुद्रायन्त्रालये
संमुद्रिता ।
१९२४.**

॥ श्रीः ॥

॥ साम्बाय नमः ॥

# ॥ भूमिका ॥

यादृशग्रन्थपरिशीलनेन संस्कृतभाषया व्यवहर्तुं लिखितुं च सामर्थ्यं भवेत्तादृशसुलभवाक्यघटिता गद्यग्रन्थाः भाषान्तरेष्विव संस्कृतभाषायां प्रचुरतया न सन्ति । सत्स्वपि केषुचन कादम्बर्यादिग्रन्थेषु ते अतिप्रौढतया बालानां भाषाव्यवहारे नोपयुज्यन्ते । अत एवाधीतकाव्यचम्प्वादिग्रन्था अप्यनेके जनाः संस्कृतभाषया व्यवहर्तुमशक्ता दृश्यन्ते । आङ्ग्लादिभाषान्तरेषु तथाविधानामेव ग्रन्थानां प्राचुर्येण सत्त्वात् तादृशग्रन्थेषु द्वित्रग्रन्थाध्ययनेनापि तद्भाषया प्रायशो बाला व्यवहर्तुं लिखितुं च समर्था भवन्तीति बहवो मन्यन्ते । तदभिप्रायानुसारेण मया अनेनापि ग्रन्थेन संस्कृतभाषाव्युत्पित्सूनां बालानां यत्किंचित्तादृशप्रयोजनं भवेदिति अयं ग्रन्थः आङ्ग्लग्रन्थरचनासरणिमनुसृत्य रचितः ॥

अस्मिंश्च ग्रन्थे बालानां मृगपक्ष्यादिजन्त्वाकृतिस्वभावादिपरिज्ञानार्थं तत्तत्स्वभावादिबोधकाः कतिचन पाठाः प्रवेशिताः । एतद्ग्रन्थपठनेन बालाः साधुवृत्ता भवन्त्विति सद्वृत्तबोधकाः

पाठाः बाहुल्येन लिखिताः सन्ति । अध्येतृचित्तविनोदप्रदा अपि काश्चन कथाः संगृहीताः । गद्यपद्यविवेकार्थं श्लोकरूपेणापि केचन पाठाः रचिताः सन्ति ॥

बहुश्रममङ्गीकृत्य यथाशक्ति कृतपरिशोधनेऽप्यस्मिन्ग्रन्थे यदि स्खलितमुपलभ्येत तदा गुणैकपक्षपातिभिर्दयालुभिस्तच्छोदनीयमित्यभ्यर्थयते—

जी. रामस्वामिशास्त्री ।

ः इवेन सह (नित्य) समासो विभक्त्यलोपश्च। (वार्ति
'रूपावतार' पृष्ठ १८

॥ श्रीः ॥

॥ शिवाय नमः ॥

# ॥ संस्कृतप्रवेशिनी ॥



## १. गजः ।

---

पश्य कोऽपि स्थूलकायो नीलो जन्तुरागच्छति। अस्मद्दृष्टेषु कोऽप्ययमिव स्थूलो न भवति। अयमेव

गज इति कथ्यते । अस्य स्तम्भा इव चत्वारः पादाः सन्ति । शूर्पसदृशौ विशालौ द्वौ कर्णौ स्तः । अस्याक्षिणी न विशाले । अस्य कन्धरा पीवरा ह्रस्वा च । अत एवायं भारवन्तं बृहन्तं मस्तकं धर्तुं शक्नोति । योऽयं मुसल इवायतोऽवयवस्तस्य मस्तकादधोऽवलम्बते स क इति किं त्वं जानासि? सैव गजस्य नासिकास्थानीया । अतोऽन्या कापि नासिका अस्य नास्ति । सा शुण्डेति व्यवह्रियते । गजस्तयैव निश्वसिति, गन्धं च जिघ्रति । कन्धराया अतिह्रस्वतया सः अश्वादिरिव भूमिस्थस्तृणाद्याहारमास्येन गृहीतुमशक्त इति ईश्वरेण द्राघीयसी शुण्डा निरमायि । गजस्तयैवाहारादिकमास्यं नयति। शुण्डाया बृहत्त्वेऽपि गजस्तया अल्पमपि वस्तु गृहीतुं शक्नोति । तस्या बलिष्ठतया गजस्तया वृक्षस्य महतीमपि शाखामनायासेन भनक्ति ॥

गजस्य जलावगाहने अधिका प्रीतिरस्ति । स स्नानसमये शुण्डया जलमादाय शरीरोपरिभागं सिञ्चति; शुण्डाग्रं जलाद्बहिर्निधाय निमज्जति च । शृङ्गे इव ये द्वे श्वेते वस्तुनी शुण्डाया उभयपार्श्वे निर्गते स्तः, तौ गजस्य दन्तौ । तौ पञ्चवितस्तिदीर्घे वर्धेयाताम् । गजदन्तः बहुकार्योपयोगी । तेन त्सरुः कङ्कतिका व्यजनादयश्च क्रियन्ते । गजस्य केनाप्यप-

कारे कृते स तं मनसि निधाय तस्य प्रतिकुर्यात्। तस्मिन्विषये काचन कथा दृष्टान्ततया अत्र लिख्यते-

१९ अप्रैल १९३२

## गजः सौचिकश्च ।

एकस्मिन्नगरे कश्चन सौचिकोऽवर्तत । कस्मिंश्चिद्दिने तस्मिन् सेवनशालायां सूचीकर्म कुर्वति कश्चन गजस्तन्मार्गेण जलं पातुमाधोरणेन सह नदीं प्रातिष्ठत । अथाधोरणस्तस्य सौचिकस्य सेवनशालायाः समीपे गजं स्थापयित्वा केनचित्पुरुषेण सह संलपन् क्षणमतिष्ठत् । तदा गजः सौचिको यत्रातिष्ठत्तत्समीपस्थे गवाक्षे स्वशुण्डां लीलया केवलं प्रावेशयत्, न तु तस्य सौचिकस्य यत्किंचिदनिष्टस्य चिकीर्षया । अथापि गवाक्षसमीपोपविष्टः स सौचिकः सूच्या तस्य शुण्डाग्रमपाविध्यत् । अनुपदमेव गजः स्वशुण्डां बहिरपकृष्य आधोरणेन सह जलपानार्थं नदीमगमत् । स जलं पीत्वा पङ्कमिश्रं जलं शुण्डादण्डेनादाय प्रतिनिवर्तमानस्तस्य सौचिकस्य गृहसमीपमागत्य तं तन्निकटवर्त्यनर्घवस्त्रौघं च जलेन संसिच्यायासीत् । स च सौचिकः अनर्घवस्त्रनाशेन भृशमखिद्यत ॥ २१ अप्रैल १९३२

१८५ नुम् शान्या:॥

## २. पिपीलिकाकपोतश्च ॥



काचन पिपीलिका स्वतृषं शमयितुं कस्याश्चिन्नद्यास्तीरभूमिमधिगत्य जलं पिबन्ती तरङ्गताडिता जलेऽन्यपतत्। कृतबहुप्रयत्नापि सा तीरमधिगन्तुमशक्नुवंती निमज्जनोन्मुखी बभूव। तदा तन्नदीतीरप्ररूढस्य कस्यचिद्वृक्षस्य शाखायां जलोपरि लम्बमानायां तिष्ठन् कश्चन कपोतस्तां तदवस्थापन्नामैक्षत। ततः स दयया एकं पलाशमाच्छिद्य पिपीलिकायाः समीपे जले अपातयत्। सा तदारुह्य तेन सह प्लवमाना सुरक्षितं तीरमगमत्॥

अथानतिचिरादेव कश्चन व्याधस्तद्वृक्षसमीपमागत्य विहगग्रहणोपयोगिद्रवपदार्थलिप्तां विकीर्णधान्यविशेषामेकां शाखां प्रच्छन्नः कपोतस्य पुरतः अदर्शयत्। ततस्तीरस्थिता पिपीलिका तां शाखां दृष्ट्वा, मनस्यचिन्तयत्-- अयं कपोतः अस्याः शाखाया उपरि विकीर्णानि धान्यादीनि खादितुमस्यां शाखायामुपवेक्ष्यति; तदा कपोतस्य चरणौ शाखास्थद्रवपदार्थेन दृढं संसक्तौ भविष्यतः; स स्वचरणौ तस्याः शाखायाः मोचयितुमसमर्थः व्याधेन गृहीतो भविष्यति; अतः कपोतो लब्धोपकारेण

मया रक्षितव्यः; तं प्रत्युपकर्तुमयमेवावसर इति। एवं विचिन्त्य पिपीलिका व्याधस्य पादं दृढमदशत्। व्याधः पादं ससंभ्रमं धुन्वन् हस्तास्थितां शाखां भूमावाक्षिपत्। तस्मात् भीतः कपोतः कुत्रचिदड्डयिष्ट॥

२८ अप्रैल १९३२

## ३. संभाषणम्॥

—*—

रामः— रे, शिव, मुकुन्दसदनद्वारे कुतो जनसंमर्दः? पश्य, मुकुन्दस्य भ्राता विषण्णवदन इव लक्ष्यते। स ससंभ्रममन्तर्गच्छति, बहिरागच्छति च। किमस्य विषादस्य निमित्तम्?

शिवः— किं त्वं नाज्ञासीः? कुत्र त्वमेतावन्तं कालमत्रातिष्ठाः?

रामः— अहमस्मिन्दिने प्रत्युषस्येव पित्रा घृतमानेतुं समीपवर्तिग्रामं प्रति प्रेषितः इदानीमेवागत्य कृतस्नानभोजनः बहिरागमम्। अतो नाहं किंचिदपि वेद्मि॥

शिवः— तर्हि शृणु, वच्मि। प्रातरुद्याने मुकुन्दः

सर्पदष्टो मोहमुपगतः । तस्य पिता तद्वृत्तान्तं श्रुत्वा उद्यानं गत्वा, तं स्कन्धेनोह्य गृहमनैषीत् । तद्भ्रात्रानीतेन विषवैद्येनेदानीमेव मुकुन्दो निर्विषः कृतः । इदमेव तत्पितृभ्रात्रादीनां विषादस्य निमित्तम् । अत एव मुकुन्दसदने जनसंहतिः ॥

रामः— मुकुन्दः क्वावर्तत? कथं सर्पस्तमदशत्?

शिवः— अनध्यायोऽयं दिवस इति प्रातर्मुकुन्दो विहरणार्थं माधवेन साकमुद्यानमगमत् । स तत्र पुष्पाण्यवचिन्वंश्चिरं माधवेन सह विहरति स्म । पश्चादेकं चूतवृक्षं दृष्ट्वा तत्कोटरे शुकशावका वर्तेरन्निति मत्वा तद्ग्रहणाय वृक्षमारुक्षत् । अत्र कोटरे शुकशावकोऽस्ति न वेति दृशा अनवलोक्यैव स कोटरे करं न्याक्षिप्त । तदा कोटरस्थः कश्चन सर्पस्तस्य हस्तं दृष्ट्वा बहिर्निरगमत् । स सर्पं दृष्ट्वा भीतो भूमौ न्यपतत् । अचिरेणैव विषव्याप्तो मोहमगमच्च ॥

रामः— तर्ह्यस्माभिरपीतःपरं सम्यगवेक्ष्यैव कोटरे बिलादौ वा करः प्रवेशयितव्यः ॥

१ मई १९३२



## ४. गोदोहकः ॥



मुग्धस्य कस्यचिद्ग्राम्यस्य वशे एका धेनुरवर्तत। सा तस्मै द्विप्रस्थपरिमितं पयो ददती तस्थौ। अथैकदा स मुग्धो मनस्यचिन्तयत्— अस्मिन्ग्रामे महान् कश्चनोत्सवः प्रत्यासन्नो वर्तते; तदा जनानां समाजो भवेत्; पयोमूल्यमधिकं च स्यात्; तदितः परमदुहानः अस्या मम धेनोः पयः समग्रमपि एकवारमेवोत्सवे धोक्ष्यामीति। स एवं विचिन्त्य मासमात्रं तां धेनुं पयो नाधुक्षत्। तदनु मासात्परमुत्सवः प्राप्तः। तदा स मूढस्तां धेनुमखिलं पयो

दोग्धुमारभत । बहुदिनपर्यन्तं दोहनविच्छित्त्या सा धेनुः पूर्वदत्तपरिमितमपि पयस्तस्मै नादात् ॥

## मूर्खभृत्यः ।

कस्यचित्पुरुषस्य मूर्खः कश्चन भृत्यः आसीत् । एकदा स तं तैलमानेतुं वणिजोऽन्तिकं प्रैषयत् । स वणिक्समीपं गत्वा तस्मान्मृत्पात्रे तैलमुपादत्त । तैलपात्रं गृहीत्वा आगच्छन्तं तं कश्चन सुहृच्छिद्रमालोक्यावदत्, सखे, पात्रतस्तैलमधःस्रवति, अतस्तैलं रक्षेति । तदाकर्ण्य मूढः पात्रस्याधोभागं वीक्षितुं पात्रं पर्यवर्तयत् । तेन सर्वमपि तैलं पात्राद्भुव्यपतत् । तद्दृष्ट्वा सर्वेऽपि जनाः जहसुः । ततः स्वामिना विदितवृत्तान्तेन स मूढो गृहान्निर्वासितः ॥



## ५. यूकामत्कुणौ

—*—

राज्ञः कस्यापि शयने चिरमासीदलक्षिता ।
यूका कुतश्चिदागत्य नाम्ना मन्दविसर्पिणी ॥ १ ॥

अकस्मात्तत्र चोपेत्य कुतोऽपि पवनेरितः ।
विवेश शयनीयं तट्टिट्टिभो नाम मत्कुणः ॥ २ ॥

मन्निवासमिमं कस्मादागतस्त्वं व्रजान्यतः ।
इति मन्दविसर्पिण्या स दृष्ट्वा जगदे तया ॥ ३ ॥

अपीतपूर्वं पास्यामि राजासृक्त्वत्प्रसीद मे ।
देहीह वस्तुमिति तामवादीत्सोऽपि मत्कुणः ॥४॥

ततोऽनुरोधादाह स्म सा तं यद्येवमास्व तत् ।
किं त्वस्य राज्ञो नाकाले दंशो देयस्त्वया सखे ॥

देयोऽस्य दंशः सुप्तस्य रतसक्तस्य वा लघु ।
तच्छ्रुत्वा मत्कुणः सोऽत्र तथेत्युक्त्वा ह्यवर्तत ॥

शय्याश्रितं विनिद्रं च नृपमाशु ददंश सः ।
उत्तस्थौ च ततो राजा हा दष्टोऽस्मीति स ब्रुवन् ॥

ततः पलायिते तस्मिंस्त्वरितं मत्कुणे शठे ।
विचित्य राजभृत्यैः सा लब्धा यूका व्यपाद्यत ॥

एवं टिट्टिभसंपर्कान्नष्टा मन्दविसर्पिणी ॥
६ अप्रैल १९३२



## ६. वानरः



पश्य, गृहाणां पटलेषु धावतो वानरान् । तेऽतीव दुष्टचेष्टिताः आपणादौ विद्यमानानि फलानि अन्यानि भक्ष्यवस्तूनि चापहृत्य धावन्ति ; तेऽतिचपलाः ; अनलसाश्च । पश्य, कथं ते गृहाद्गृहान्तरमुत्प्लवन्ते । वानराश्चरमपादाभ्यां नरा इव गन्तुं शक्नुवन्ति । किं च यथा वयमस्मद्धस्तावुपयुञ्ज्महे, तथा वानराः स्वेषामग्रपादावुपयुञ्जते । पश्य, पश्य, कश्चन वानरः कस्यचिद्बालकस्य हस्तस्थितं नालिकेरखण्डं बलाद्गृहीत्वा गृहपटलमारोहति । स तत्रोपविश्य नालिकेरखण्डमग्रपादेन गृहीत्वा खण्डशो दशनैःखादति ॥

वानरा यावन्तं खाद्यमास्ये निक्षिपन्ति, तावन्तं युगपन्न ग्रसन्ते; किं तु कपोलान्तर्वर्तिन्यां कस्यांचन चर्मभस्त्रिकायां विन्यस्य यथावकाशं संदश्य ग्रसन्ते। वानरस्य पादाः नास्मत्पादसदृशाः सन्ति; किं तु प्रायेणास्मद्धस्ताननुकुर्वन्ति। अत एव केचन वानरान् चतुष्पाणीन् भणन्ति। वानरा न भूतले निवसन्ति; किं तु वृक्षेष्वेव। अत एव ते शाखामृगा इति कथ्यन्ते। वानरा नर्तितुमुत्प्लवितुमन्या अपि चेष्टाः कर्तुं शिक्षिता भवन्ति। अतः केचन वानरान् गृहीत्वा तान्वशीकृत्य शिक्षितनर्तनादिकैस्तैर्विस्मयनीयाश्चेष्टाः कारयित्वा धनादिकमर्जयन्ति ॥ ८ अप्रैल १९३२ मई

## ७. गोपालः नारङ्गफलं च ॥

---

कश्चन कृषीवलः पिटकमेकं नारङ्गफलपूरितं शिरसोद्वा पण्यवीथिकामगच्छत्। तस्मिन्गच्छति पञ्चषाणि फलानि पिटकात्परिस्रस्य भूमौ न्यपतन्। पतितानि फलानि कृषीवलो नालक्षयत्। गोपालनामधेयः कश्चन दरिद्रो बालकस्तानि फलानि गृहीत्वा कृषीवलमाह्वयत्। कृषीवलः परिवृत्य गो-

पालं दृष्ट्वा तत्रैवास्थात्। स बालकस्तत्समीपं गत्वा त्वयि गच्छति, इमानि फलानि पिटकात्परिभ्रष्टानि, गृहाणेमानीत्युक्त्वा तस्मै तानि फलान्यदात्। कृषीवलः शिरस्थं पिटकं भूमौ निधाय तानि फलानि गृहीत्वा बालकमवोचत्, बालक, तव सद्वृत्तेनाहं भृशमतुषम्; अतस्त्वमेतेषु फलेषु ये तुभ्यं रोचेते ते द्वे फले गृहाणेति। तथैव स बालको द्वे फले प्रत्यग्रहीत्॥

गते कृषीवले, अन्यः कोऽपि बालको गोपालसमीपमागत्य तमवोचत्, गोपाल, अधःपतितानि सर्वाण्यपि फलानि कुतस्त्वया न स्वायत्तीकृतानि? किमर्थं फलपतनमजानते कृषीवलाय तान्यदाः? तानि स्वायत्तीकृतानि चेत् तेष्वेकं मह्यमेकमितरस्मै च दातुं शक्यं स्यादिति। स तं प्रत्यवोचत्, वयस्य मैवं वादीः, यद्यपेक्षा तव गृहाणेदं फलम्, यत एतन्मदीयम्, यद्यहमनात्मीयं वस्तु अन्यस्मै दद्यां तदा चोरः स्याम्, दरिद्रोऽप्यहं चारित्रं मलिनयितुमल्पमपि नेच्छामीति॥

## ८. संभाषणम्॥

कृष्णः — रे राम कुत्र त्वमतित्वरितं गच्छसि?

रामः— अहं मम पित्रा देवतार्चनाय पुष्पाण्याहर्तुमादिष्टोऽस्मि, अतः पुष्पाण्यवचेतुं पुष्पवाटिकां गच्छामि ।

कृष्णः— तर्हि क्षणं तिष्ठ, यावदहमप्युत्तरीयं गृहीत्वा लघ्वागच्छामि ।

रामः (तथैव क्षणमवस्थाय कृष्णेन सह पुष्पवाटिकां गत्वा) कृष्ण, पश्य जातीमल्लिकाप्रभृतीनामनेकविधानि कुसुमानि विकसितान्यत्र सन्ति । नूनमसौ अयं पुष्पवाटिका मनसः प्रीतिमुत्पादयति ।

कृष्णः— (विचित्रपक्षान्पतङ्गादीनितस्ततो डयमानान्विलोक्य) राम, त्वमत्र पुष्पाण्यवचिन्वंस्तिष्ठ, अहं तत्र गत्वा पतङ्गादिभिः सह क्षणं विहृत्य आगच्छामि ।

रामः — (कुसुमान्यवचिन्वानः, सुन्दरमेकं पतङ्गं गृहीत्वा तस्य पक्षं भञ्जन्तं कृष्णमवलोक्य, सत्वरं तत्समीपमागत्य), रे नृशंस, किमर्थमनपराधिनस्तस्य पक्षं भनक्षि ?

कृष्णः— पक्षस्य भञ्जने का क्षतिः; केशवो बहुशस्तः पतङ्गादीन् कण्टकेनापविध्यन्मया दृष्टः ।

रामः— हा, अतिक्रूरकर्मा सः, स किं पतङ्गादयो

न प्रादुर्भवि

व्यथां नानुभवन्तीति जानाति?

कृष्णः— नाहं तद्वेद्मि, न वा तदाचिन्तयम् ।

रामः— यद्यहं कण्टकेन तव शरीरमपविध्येयम्, तव हस्तादिकं वा यदि भञ्ज्याम्, तदा त्वं किं वेदनां नानुभवेः ?

कृष्णः— अनुभवेयमेव, वेदनामसहमानो रुद्यां च ।

रामः— एवं पतङ्गादीनां पक्षादिभञ्जने तेऽपि वेदनामनुभवेयुरेवेति जानीहि । किं च मया तव हस्ते भग्ने कण्टकेन विद्धे वा, किं त्वं तूष्णीं वर्तेथाः ?

कृष्णः— नाहं कदापि तूष्णीं तिष्ठेयम्, किं तु तुभ्यं कुप्येयम्, यतः तन्मम व्यथां जनयेत् ।

रामः— यद्येवं तर्ह्यस्माभिः पतङ्गादीनां पक्षे भग्ने, तत्तेषामपि किं व्यथां न जनयेत्? जनयेदेव । अतोऽस्माभिः पतङ्गादीनां पक्षादयो न भञ्जनीयाः ।

कृष्णः— अजानता मया अस्य पतङ्गस्य पक्षो भग्नः; नाहमितः परं प्राणिनां पीडाकरं किमपि कर्म कुर्याम् ॥

१२ मई १९३२

## ९. क्रोधनः ॥

गृहस्थः कश्चन पुरुषः स्वमित्रस्य कस्यचिद्बहिःस्थितस्य शृण्वतो गुणान् स्वजनाग्रतो जगाद। तदा तेष्वेकस्तमब्रवीत्, सखे, सत्यं स गुणवानेव, किंतु द्वौ तस्य दोषौ स्तः; यतः स साहसी क्रोधनश्चेति। एवंवादिनं पुरुषं बहिःस्थितः पुमान्निशम्यात्यन्तं क्रुद्धः सहसा अन्तरागत्य वाससा तस्य कण्ठं वेष्टयित्वा, रे जाल्म, किं मे साहसम्? कः क्रोधश्च मया कृत इत्यवोचत्। तद्दृष्ट्वा हसन्तः तत्रस्था जनाः तमवादिषुः, रे मूर्ख, प्रत्यक्षेणैव त्वया क्रोधसाहसे दर्शिते, किमितोऽन्यद्वक्तव्यमिति। एवमज्ञैः प्रकटोऽपि स्वदोषो न बुध्यते ॥

## अपूपभक्षकः।

कश्चन मुग्धः कदाचिद्ग्रामान्तरं जिगमिषुः पथि भोजनार्थैकेन पणेन अष्टावपूपानक्रीणात्। स तान् गृहीत्वा ग्रामात् प्रस्थाय बहुदूरमगमत्। ततः श्रान्तो मार्गमध्ये कंचन तटाकं दृष्ट्वा तत्समीपे समुपविश्य कृतहस्तादिक्षालनः स्वसमीपस्थेष्वपूपेषु षड्

पूपान्प्रथममभुङ्क्त । षट्स्वपूपेषु भुक्तेष्वपि स तृप्तिं नाध्यगच्छत् । ततः सप्तमोऽपूपस्तेन भुक्तः । भुक्तेन सप्तमेनैव तस्य तृप्तिरुदपद्यत । ततः स जडः क्रन्दितुमारभत, हा हतोऽस्मि मुषितोऽस्मि । कुतो मया मूढेनादित एवायं सप्तमोऽपूपो न भक्षितः, येन तर्पितोऽस्मि, वृथैव मया अन्ये षडपूपा नाशिता इति ॥

२५ मई १९३२

## १०. हंसौ कूर्मश्च ॥

हितोपदेशोऽनुष्ठेयो विनाशः प्राप्यतेऽन्यथा ।
तथा च कम्बुग्रीवाख्यः कूर्मः क्वापि सरस्यभूत् ॥

तस्यास्तां सुहृदौ हंसौ नाम्ना विकटसंकटौ ।
एकदावग्रहक्षीणजले सरसि तत्र तौ ॥ २ ॥

हंसावन्यत्सरो गन्तुकामौ कूर्मो जगाद सः ।
युवां यत्रोद्यतौ गन्तुं नयतं तत्र मामपि ॥ ३ ॥

green दूर

दन्तैः आत्ता (गृहीता) यष्टिः येन स दन्तात्तयष्टिः

तच्छ्रुत्वा तावुभौ हंसौ कूर्मं तं मित्रमूचतुः ।
सरो दूरीयस्तद्यत्रावां गन्तुमुद्यतौ ॥ ४ ॥

तत्रागन्तुं तवेच्छा चेत्कार्यमस्मद्वचस्त्वया ।
अस्मद्धृतां गृहीत्वैव दन्तैर्यष्टिं दिवि व्रजन् ॥

निरालापोऽपि तिष्ठेथाः भ्रष्टो व्याहरसेऽन्यथा ।
तथेति तेन दन्तात्तयष्टिना सह तौ नभः ॥ ६ ॥

कूर्मेणोत्पेततुर्हंसौ [illegible]रात्तयष्टिकौ ।
क्रमाच्च तत्स[illegible] प्राप्तौ तौ कूर्मधारिणौ ॥ ७ ॥

[illegible]धोवर्ति नगर[illegible]णो जनाः ।
किमेतन्नीयते चित्रं हंसाभ्यामिति तैर्जनैः ॥ ८ ॥

क्रियमाणं कलकलं स कूर्मः [illegible]ऽशृणोत् ।
कुतः कलकलो[illegible] वक्तुं [illegible]हाय ताम् ॥

यष्टिं स [illegible]न्हंसौ तौ भ्रष्टो जघ्ने जनैर्भुवि ।
एवं बुद्धि[illegible]तो नश्येत्कूर्मो यष्टिच्युतो यथा ॥

१९ मई १९३२



## ११. महिषः ॥

पश्य तस्य महतो वटवृक्षस्य छायायां विद्यमानं महिषाणां सङ्घम् । तस्यानतिदूरे यश्चतुर्दशवर्षवयस्को बालकः करे दण्डं गृहीत्वा तिष्ठति, स एव महिषचारकः । स तान्महिषान्वने चारयति; सायं च गृहं नयति; विलोकय, स महिषस्य पृष्ठमारोहति; आरुह्य दण्डेन तं प्रहरति; प्रहृतोऽपि स मन्दं मन्दमेव गच्छति । महिषा मन्दगामिनः; किंचिद्दूरमपि ते न प्रधावितुं शक्नुवन्ति ॥

महिषस्यापि गोरिव द्वे शृङ्गे विभक्ताश्चत्वारः खुराः एकं पुच्छं च सन्ति । महिषाः प्रायशः श्यामवर्णाः । गवादीनामिव महिषाणां गात्रे निबिडानि

तनूरुहाणि न सन्ति । अतस्ते आतपादधिकं बिभ्यन्ति, आतपतापं न सहन्ते । महिषाणां जलावगाहने अधिका प्रीतिः । जलं पातुं महिषा तटाकं नदीं वा यदि नीयेरन्, तदा अनुपदमेव ते जलमवगाहेरन् । ते स्वशिरांसि जलोपरि निक्षिप्य सुचिरं जले मज्जन्तस्तिष्ठन्ति ॥

महिषे बलमधिकं वर्तते । स वृषभ इव भारं शकटादिकं च वहति । कृषीवलो वृषभानिव महिषानपि हले संयोज्य क्षेत्रादिकं कर्षति । महिषी गोरधिकं क्षीरं ददाति । माहिषं क्षीरं गोक्षीराद्घनम्, तस्मादधिकं नवनीतमुत्पद्यते । किं तु माहिषं क्षीरं गोक्षीरमिव न स्वादु, नापि शरीरारोग्यकरम् । अत एव जनास्तस्याः क्षीरं प्रायशः शिशून् पाययन्ति, स्वयं न पिबन्ति च ॥

## १२. यथार्थवादी ॥

वासुदेवाभिधः कश्चन बालकोऽवर्तत । एकदा तस्य पिता तस्मै एकां ताम्रमुद्रामदात् । स तां गृहीत्वा फलादिकं क्रेतुं पण्यवीथिमगच्छत् । तस्मिन्गच्छति तद्धस्तस्थिता ताम्रमुद्रा प्रभ्रश्य भुवि पांसुषु

कुत्रचिन्न्यपतत् । स तां सुचिरमन्वेषयामास । अथापि स तां न समासादितवान् । तेन दुःखितः सः तत्रैवोपविश्य रोदितुमारभत । ततस्तन्मार्गगामी कश्चन धनिकः पुमान् रुदन्तं वासुदेवं दृष्ट्वा, बालक, किमर्थमत्र रुदंस्तिष्ठसि इत्यपृच्छत् । स तं प्रत्यवदत्, ममैका मुद्रा नष्टा, सा मया चिरमन्विष्टापि न लब्धा, अतो रोदिमीति । ततः स पुमानेकां सुवर्णमुद्रां करे गृहीत्वा, नष्टा त्वदीया मुद्रा किमियं नेत्यपृच्छत् । बालकस्त्ववोचत्, न हि न हि, इयं सुवर्णमयी मुद्रा, मदीया तु न स्वर्णमयीति । अथ रजतमयीं मुद्रां प्रदर्श्य, तर्हीयमेव मुद्रा त्वदीया भवेदित्यहं मन्ये इति तेन पुरुषेणाभिहितो वासुदेवः, रजतमयी मुद्रापि न मदीयेत्यवोचत् । तर्हीयं किं तव मुद्रेत्युक्त्वा स ताम्रमुद्रामादायादर्शयत् । बालकस्तां दृष्ट्वा सहर्षमभाषत, इयमेव, अथवा एतत्सदृश्येव नष्टा मदीया मुद्रेति । तुष्टः स पुरुषः अहं सुवर्णरजतमुद्रे अपि तुभ्यं ददामि, यतस्त्वं सत्यमवादीरित्युक्त्वा, ते अपि बालकायाददात् । तद्दृष्ट्वा तत्रस्था जनाः अयमेव सत्यवादी, यस्मात्सुवर्णमुद्रां लब्धुमयमनृतं नावादीदित्युक्त्वा तस्मिन्प्रीतिमकार्षुः ॥

२० मई १९३२

वैशाख सुदि ९ पूर्ण ... ।

## १३. संभाषणम् ॥

**केशवः**— माधव, किं त्वं मया सह स्नातुं वापीमागच्छसि ?

**माधवः**— आगच्छामि, कां वापीं गच्छेव ?

**केशवः**— रामस्यारामे विद्यमानां वापीं गच्छेव। सा अतिविशाला, चतुर्षु पार्श्वेषु निर्मितशिलासोपाना। तस्याः जलमतिस्वच्छम्।

**माधवः**— ओम् अतिविमलं जलम्, अत एवान्तरस्था मत्स्यादयः स्फुटं दृश्यन्ते, मया दृष्टचरी सा वापी, आगच्छ, गच्छेव।

**केशवः**— (माधवेन सह गत्वा) माधव, प्रथमतो वस्त्राणि क्षालयित्वा पश्चात्स्नावः। सखे, कुतस्तव वासो मलिनं वर्तते, कः प्रत्यहं तव वासः क्षालयति ? मलिनवस्त्रं स्प्रष्टुमपि मह्यं न रोचते, कथं त्वमेतादृशं मलिनं वस्त्रं परिधत्से।

**माधवः**— नाहं प्रत्यहं मम वस्त्रं क्षालयामि। किंतु माता मे क्षालयति।

केशवः— तव दृढे हस्तपादे सति, कुतो वस्त्रं मात्रा क्षालयेम्, कथं सा वृद्धा सर्वाणि गृहकार्याणि कृत्वा तव वस्त्रमपि क्षालयितुं शक्नुयात् ? वार्धके पित्रोः साहाय्यमस्माभिः कार्यम्। एवं स्थिते कथं त्वं वृद्धां वस्त्रक्षालने प्रेरयसि ?

माधवः— वस्त्रक्षालनादिरूपक्षुद्रकर्मकरणमस्माकं न सदृशमिति नाहं वस्त्रक्षालनादिकं करोमि।

केशवः— दुरभिमानी अलसश्चैवं मन्यते। विवेकिन आर्या नैवं मन्येरन्। यान्यात्मसुखसाधनान्यस्माभिः कर्तुं शक्यानि कृत्यानि, तान्यस्माभिरेव कर्तव्यानि, न त्वितरैः कारयितव्यानि। तदर्थमेवेश्वरेणेतरेषामिवास्माकमपि करचरणादयः सृष्टाः सन्ति। अन्धपङ्ग्वादीनां खल्वितरापेक्षा, नास्माकं दृढावयवानाम्। तदितः परमात्मरक्षार्थं यदवश्यं कर्म कर्तव्यं तत्त्वं स्वयमेव कुरु; मात्रादीनामपि यथा शक्त्युपकुरु।

माधवः— अहमितःपरं तथैव करोमि।

केशवः— सखे जलमवतर, स्नायाव, जलेन शरीरं सम्यक् क्षालय, शरीरस्थं मलं यथा निःशेषं नि-

गच्छेत् तथा स्नातव्यम् । तादृशस्नानमेव शरीर-शुद्धिकरमारोग्यकरं च ।

**माधवः**— अतिशीतलं जलम्, जलस्पर्शेन रोमोद्गमो जायते, शरीरं च कम्पते ।

**केशवः**—वापीमध्यं मा गमः, अगाधतया अन्तर्निमज्जेः । महान्कालो अतिक्रान्तः; तदेहि गृहं याव ॥ २५ मई १९३२



## १४. तण्डुलभक्षको जामाता ।

कश्चन मूर्खः पुमानेकदा श्वशुरगृहमगमत् । स तत्रैकस्मिन्दिने श्वश्र्वां स्नानार्थं गतायां महानसं गत्वा तत्र पाकार्थं स्थापितान् [illegible]नान् तण्डुलान्वीक्ष्य, एकां तण्डुलमुष्टिमादाय भक्षयितुमास्ये प्राक्षिपत् । तस्मिन् क्षणे स्नातागतां श्वश्रूं वीक्ष्य ह्रिया तांस्तण्डुलान्निगिरितुमुद्गिरितुं वा स नाशकत् । ततः श्वश्रूः पीनोच्छूनगलं तं वीक्ष्य किं तव गले वर्तेत इति पृष्टोऽपि यदा स मूर्खस्तस्यै प्रत्युत्तरं नाददात्, तदा सा रोगेणास्य गलः उच्छूनो जातः अतो लपि-

तुमयं न शक्नोतीति मत्वा पतिमाहूय तस्यागदर्शयत् । सोऽप्यालोक्याशु वैद्यमानयत् । वैद्यस्तस्य गलं दृष्ट्वा शोफमाशङ्कमानस्तस्य मूढस्य गलमपाटयत् । एवमज्ञा अकार्यं कुर्वन्ति । किं तु तद्गूहितुमुपायं न जानन्ति ।

## गायकः ।

कदाचित्कश्चन गायकः कंचनाढ्यं वीणादिवाद्ययुक्तेन गीतेनाधिकमतोषयत् । स तस्य गीतं श्रुत्वा, अहो साध्वनेन गीतमित्युक्त्वा भाण्डागारिकमाहूय, अस्मै गायकाय पञ्चशतरूपकान् देहीति तत्समक्षमभाषत । स एवं करोमीत्युक्त्वा निर्ययौ । अथ तुष्टो गायको भाण्डागारिकसमीपं गत्वा तमाढ्योक्तान् रूपकानयाचिष्ट । स याचितोऽपि तस्मै किमपि नाददात् । ततः स आढ्यसमीपं गत्वा रूपकान् दापयेति प्रार्थयत । स तमब्रवीत्, किं त्वया मे रूपका दत्ता भवन्ति, येनाहं प्रतिददानि ; त्वया गीतादिना केवलं श्रुतिसुखं कृतम्, मयापि तथैव दानवाक्येन तव श्रुतिसुखं कृतमिति । तदाकर्ण्य विहताशोऽपि गायको हसन् ययौ ॥

२६ मई १८९२

## १५. मेषवृकौ ॥

कस्मिंश्चिद्दिवसे ग्रीष्मे मध्याह्नसमये क्वचित् ।
पर्वताग्रादधः कांचित्प्रवहन्तीं तरङ्गिणीम् ॥ १ ॥

तृट्पीडितः कोऽपि वृकः समागत्य जलं पपौ ।
तस्मिन्नवसरे मेषो व्रजात्प्रभ्रश्य कश्चन ॥ २ ॥

स्रोतोवहां च तामेव समागच्छत्पिपासितः ।
वृकदेशात्क्वचिद्दूरे तिष्ठन्सोऽपि पपौ जलम् ॥३॥

वृको विलोक्य तं मेषं मनस्येवं व्यचिन्तयत् ।
कयापि युक्त्या व्यापाद्य खादनीयो मयेत्ययम् ॥

एवं वृकः समालोच्य तं मेषं समुपासरत् ।
उपसृत्य स दुष्टात्मा सक्रोधं तं समभ्यधात् ॥५॥

मूर्खाविलं कुतोऽकार्षीः पीयमानं मया जलम् ॥
इति तेन प्रकथितः प्रोवाच भयकम्पितः ॥ ६ ॥

वृकराज कथं कर्तुं शक्नुयामाविलं जलम् ।
त्वत्सकाशान्मत्समीपमागच्छति यतो जलम् ॥

इत्येवमुक्तो मेषेण वृकस्तं पुनरब्रवीत् ।
तदास्तां वत्सरात्पूर्वं मामनिन्दीरिति श्रुतम् ॥

किमर्थं त्वमनिन्दीर्मामित्युक्तः प्रत्युवाच तम् ।
स्वामिन्निदमसंभाव्यं नाहं जातस्तदा शुचि ॥९॥

जातस्य मातुर्जठरात्त्रयो मासा यतो गताः ।
मया प्रोक्तं द्वयमपि विषादस्य च कारणम् ॥ १० ॥

वृथाकृतमनेनेति कुपितोऽसौ वृकोऽब्रवीत् ।
त्वया मूढानिन्दितोऽपि पित्रा स्यां तव निन्दितः ॥

इत्युक्त्वा भयसंभ्रान्तं मेषं हत्वा चखाद सः ।
निष्कारणं दुष्टजना हिंसन्त्येवं सुदुर्बलान् ॥ १२ ॥

२८ मई १९३२



## १६. सृगालः ॥

रात्रौ प्रतिदिनमस्मद्गृहसमीपवर्तिनो वनात् यद्भीषणं रुतं श्रूयते तत्कस्य जन्तोरिति किं त्वं वेत्सि?

तत्सृगालस्य रुतम । सृगालाः प्रायशो दिवा न सञ्च-रन्ति, किं तु रात्रावेव सङ्घीभूय वहिर्निर्गच्छन्ति । अतो रात्रावेव तेषां रुतं शृणुमः । सृगालः शुनक-जातीयः, प्रायशः आकृत्या शुनकसदृशः, किं तु तस्य नासिका शुनकस्य नासिकात उ ग्रा, वालश्च लोम-शो दीर्घश्च । उत्तरदेशेषु वर्तमानानां सृगालानां श-रीरेषु निबिडानि मृदूनि रोमाणि सन्ति । शिशिरका-लेषु अतिनिबिडं रोमाणि प्ररोहन्ति शुक्लीभवन्ति च । व्याधास्तेषां चर्मग्रहणार्थं तान् घ्नन्ति । व्याधैरनु-धावितं चेत्ते गुल्मादिषु निलीना भवन्ति । तदा श्वानो गन्धेन तत् स्थानं ज्ञात्वा भषणेन दंशनेन वा तान्बहिर्निर्गमयन्ति । तदानीं व्याधास्तान् घ्नन्ति ।

एकः सृगालो यदि रवितुं प्रारभेत, तदा सर्वे ऽप्येकदैव रुवन्ति । तेषां रुतमतिभीषणं विरसं च । बालकास्तेषां रुतं शृणुयुश्चेन् नियतं बिभीयुः । सृ-गाला भूमौ निखातान्यपि मृतशरीराणि गन्धेन ज्ञात्वा स्वाग्रपादाभ्यां भूमिं खनित्वा तानि बहिर्नी-त्वा खादन्ति । तेषां कुक्कुटे अधिका प्रीतिः । ते रात्रौ निभृतं कुक्कुटालयं प्रविश्य कुक्कुटान् चोर-यित्वा पलायन्ते । मांसाद्याहारः पर्याप्तं यदि न लभ्येत, तदा सृगालाः फलान्यपि खादयेयुः ॥

३० मई १९३२

# १७. गोविन्दमाधवौ ॥

---

गोविन्दाभिधः कश्चन दरिद्रो ब्राह्मणो भाग्ये-च्छया कस्याश्चिन्नद्यास्तीरे तपश्चरन्नतिष्ठत् । तं दृष्ट्वा माधवाख्यस्तत्प्रातिवेश्यस्तस्या एव नद्यास्तीरान्तरे तपस्तेपे । एवं गतेषु बहुषु दिवसेषु, ईश्वरो गोवि-न्दसमीपमागत्य, अहं तव तपसा संतुष्टः, किं तवा-भीष्टं ब्रूहीत्यपृच्छत् । स ईश्वरमब्रवीत्, भगवन्, अन्यास्मिंस्तीरे माधवस्तपश्चरंस्तिष्ठति । स यत्त्वां प्रार्थयिष्यते, तद्द्विगुणं मम भवत्विति । अनन्तरमी-श्वरो माधवसविधं गत्वा अपृच्छत् का तव वाञ्छे-ति । स त्वीश्वरमपृच्छत् गोविन्दस्त्वां किमयाचि-ष्टेति । ईश्वरेणाभिहितम्, यत्त्वं याचिष्यसे, तस्मात् द्विगुणं तेन लब्धव्यमिति । तच्छ्रुत्वा परोत्कर्षमस-हमानो माधवो ममैकं नेत्रमन्धभावं प्राप्नोत्विती-श्वरं प्रार्थयत । ईश्वरस्तच्छ्रुत्वा हसन् तथैव भव-त्विति तस्मै वरं दत्त्वा अन्तरधात् । तेन माधवः काणो बभूव, गोविन्दस्त्वन्धः । एवमेवासूयकः पर-नाशमेव स्वभाग्यं मन्यते, स स्वहानिमपि न गण-यति ॥



## १८. संभाषणम् ॥

पिता—शंकर; पाठं पठ, वृथा कालं मा नैषी-रिति बहुधा मया कथितोऽपि त्वं न पठसि किं तु विहरन्नेव सततं वर्तसे।

पुत्रः—तात, किमर्थं मया पठनीयम्? पठनेन किं प्रयोजनम्?

पिता—पठनेन बहूनि प्रयोजनानि सन्ति। तानि त्वमिदानीं न जानासि, यदा परिणतवया भविष्यसि, तदा सम्यग्ज्ञास्यसि।

पुत्रः—पठनं मह्यं न रोचते, पठनापेक्षया जलाहरणकाष्ठच्छेदनक्षेत्रखननादिरूपकर्मकरणमेव दृढं मे रोचते, यतस्तादृशैरेव कर्मभिर्जना द्रव्यमर्जित्वा सुखं वर्तन्ते।

पिता—अहमेकं वृत्तान्तं कथयामि, तं शृणु। एकदा कश्चनान्यदेशीयो बालकः स्वग्रामादिदं नगरमागत्य स्नातुमेतन्नगरोपान्तवर्तिनं तटाकमगमत्। तस्य तटाकस्य तीरे कस्यचित् स्तम्भस्योपरि साक्षरः कश्चन फलको बद्धोऽभूत्।

पठनसमर्थः स बालकः फलकं दृष्ट्वा तस्मिन् लिखितानि इमान्यक्षराणि अवाचयत्—

‘यः कोऽपि इमं तटाकं वस्त्रक्षालनस्नानादिना दूषयेच्चेत् तदा स सद्य एव दण्ड्यो भवेत्’ इति ।

तेन बोधितः स बालकः तस्मिन् स्नानमकृत्वा गृहं प्रत्ययासीत् । अथ द्वित्रक्षणात्परं पठनासमर्थः कोऽप्यन्यो बालकः तमेव तटाकमासाद्य फलकमपश्यत् । किं तु किं तस्मिन् लिखितमस्तीति ज्ञातुं नाशकत् । ततस्तटाकमवतीर्य स यावत्स्नाति तावत्तीरान्तरस्थस्तटाकरक्षकस्तत्समीपमागत्य तं करे गृहीत्वा नगराधिकृतस्य समीपमनयत् । स तस्य द्वादशकृत्वः कशया ताडनरूपं दण्डमदात् । शंकरः तं वृत्तान्तं श्रुत्वा पठनेन प्रयोजनमस्तीति बुद्ध्वा ततः परं पठितुमारभत ॥ ३जून१९३२

## १९. कश्चन चोरः ॥

एकदा कश्चन चोरः नारिकेलफलमाहर्तुं कस्यचिदारामं प्रविश्य नारिकेलतरुमारुक्षत् । तस्मिन्नारोहति, आरामस्वामी आराममागच्छत् । तं दृष्ट्वा

चोरः फलमनुपचित्यैव वृक्षादवातरत् । आरामस्वामी वृक्षादवरोहन्तं चोरं दृष्ट्वा, रे, किमर्थं वृक्षमारुक्ष इत्यपृच्छत् । चोरस्तं प्रत्यवोचत्, वत्साया तृणान्युत्पाटयितुं वृक्षमारुक्षमिति । तदाकर्ण्यारामस्वामी तमब्रवीत्, रे भूमावेव तृणानि प्ररूढानि सन्ति, किं नारिकेलतरौ तृणानि रोहन्तीति । चोरः प्रत्यभाषत, तृणाभावादेवावरोहामि इति । तच्छ्रुत्वा आरामस्वामी तूष्णीं बभूव । चोरस्त्ववरुह्य यथागतमयासीत् ॥

## मुग्धः कृषीवलः

कश्चिद्ग्रामीणः कृषीवलः कदाचिद्भृष्टांस्तिलान्भुक्त्वा स्वादूनवेत्य मनस्येवमचिन्तयत् । अस्मत्क्षेत्रे समुत्पद्यमानास्तिलाः एवं स्वादवो न भवन्ति । तदितःपरमभृष्टतिला न वप्तव्याः किं तु भृष्टा एव वप्तव्याः, तथा कृताश्चेदीदृशाः स्वादवस्तिलाः समुत्पद्येरन् इति । एवं विचिन्त्य भृष्टतिलोत्पत्तीच्छया स भूरि तिलान् भृष्ट्वा भृष्टानेव तान् भूमाववपत् । भृष्टास्तिलाः कथं प्ररोहेयुः, ते न प्रारुक्षन् । तस्य तिलनाशः परमजायत ॥ ५ जून १९३२



## २०. पिता पुत्राश्च ॥

अभूवन्कस्यचित्पुंसश्चत्वारः सूनवः पुरा ।
पित्रोपदिष्टा अपि ते साधुबुद्धिं पदे पदे ॥

कुर्वन्त एव कलहं तस्थुस्ते तु परस्परम् ।
एवं कदापि कलहं मा कुर्वन्त्विति तत्पिता ॥ २ ॥

जातूदाहरणेनैव स्पष्टं बोधयितुं सुतान् ।
आहूय कांश्चिदानेतुं काष्ठदण्डान्समादिशत् ॥३॥

आनीतेषु च काष्ठेषु रज्ज्वा बध्वाथ तानि सः ।
करेण काष्ठनिचयं तं भङ्क्तुं तान्समादिशत् ॥

निजसर्वबलेनापि भङ्क्तुं ते नाशकन्यदा ।
तदा तेषां पिता काष्ठभारस्योन्मोच्य बन्धनम् ॥

एकैकं काष्ठदण्डं तमेकैकस्य करे ददौ ।
ततोऽब्रवीत्स तान्पुत्रान्भङ्क्तेदानीमिमानिति ॥

स्वस्वहस्तस्थितं काष्ठं बभञ्जुर्हेलयाथ ते ।
अब्रवीदथ तान्पुत्रान्पिता पश्यत पुत्रकाः ॥ ७ ॥

संहतस्याभेद्यत्वं विभक्तस्यापि भेद्यताम् ।
एवं परस्परं यूयं स्नेहबद्धा भवेत चेत् ॥ ८ ॥

तदा युष्मान्न शक्नोति बाधितुं कोऽपि मानवः।
यूयं कदाचित्स्नेहस्य शिथिलीकृत्य बन्धनम्॥

भवेत चेद्विघटिताः काष्ठदण्डा इव ध्रुवम्।
भवेत भङ्क्तुं शक्याश्च विनायासेन शत्रुभिः॥

तस्माद्यूयं मा कुरुत कलहादि परस्परम्।
ऐकमत्येन वर्तध्वं सर्वकार्येष्वितः परम्॥ ११॥

एवं ते बोधिताः पित्रा स्निग्धास्तस्थुरनन्तरम्।
तत्सोदरैर्वर्तितव्यं बद्धस्नेहैः परस्परम्॥ १२॥

७ जून १९३२



## २१. चटकः॥



चटकः सर्वैरपि दृष्टचर एव। त्वयापि स दृष्टो भवेत्। प्रतिदिनमस्मद्गृहाङ्गणे विकीर्णांस्तण्डुलकणान् चञ्च्वा गृह्णन्तं चटकं वयं पश्यामः। स प्रायशो

जना यत्र वसन्ति तत्रैव निवसति । सोऽतीव धृष्टः, जनेभ्यो न बिभेति । पश्य, काचन चटका वीथ्यां विप्रकीर्णांस्तण्डुलादिकणांश्चञ्च्वा गृहीत्वा समीपवर्तिन्यां भित्तौ तिष्ठते चाटकैराय ददाति । चटकस्य स्त्री चटका, तयोः पुमपत्यं चाटकैर इति, स्त्र्यपत्यं चटका इति च व्यवह्रियते । चटकाचटकयोर्महान्भेदो वर्तते । चटकस्य मस्तकः कण्ठाधोभागश्च नीलौ । चटकायास्तु मस्तककण्ठाधोभागौ न नीलौ ॥

एकदा कश्चन चाटकैरः ईषत्समुत्पन्नपक्षः स्वनीडात्प्रभ्रश्य भूमौ न्यपतत् । तदा भीता चटका उच्चैर्व्यरावीत् । तस्या विरावं श्रुत्वा समीपस्थाः सर्वेऽपि चटकाः तत्रागत्य तस्याः साहाय्यं कर्तुमयतिषत । तेषां यत्नः सफलो नाभूत् । किं ते कुर्युः? नीडाद्भूमौ पतितं चाटकैरं नीडं नेतुं ते नाशकन् । ततस्ते सर्वेऽपि महान्तं कलकलारवं कर्तुं प्रारभन्त । अथ तेष्वेकश्चतुरः कुत्रचिदुड्डीय द्वित्रक्षणात्परं चतुःपञ्चाङ्गुलपरिमितामेकां रज्जुं चञ्च्वा गृहीत्वा तत्रागच्छत् । ततश्चैकश्चटकः एकमग्रं अपरश्चापरमग्रं गृहीत्वा, रज्ज्वा मध्यमं भागं चाटकैरो गृह्णात्विति तस्य पुरतो रज्जुमदर्शयताम् । विदिताभिप्रायश्चाटकैरः रज्ज्वा मध्यमं भागं चञ्च्वा दृढमग्रहीत् । ततस्तौ द्वावपि चटकौ वियत्युड्डीय चाटकैरं नीडं

मनयताम् । तद्दृष्ट्वा इतरे चटकाः प्रहृष्टाः स्वेषां स्थानमगमन् ॥ ॥

## २२. विद्यार्थी तपोदत्तः ॥

गङ्गातीरवर्तिनि कस्मिंश्चन ग्रामे तपोदत्त इति कश्चन बालकोऽवर्तत । स शैशवे पित्रा बहुधा कथितोऽपि विद्यां नाध्यैष्ट । अनन्तरं जनैर्गर्ह्यमाणोऽनुशयान्वितो विद्यासिद्धये तपस्तप्तुं गङ्गातटमगमत् । तत्रोग्रे तपसि वर्तमानं तं तपसो निवारयिष्यन्निन्द्रो वृद्धद्विजवेषेण तन्निकटमागत्य, पश्यतस्तस्य, तटात्सिकता उद्धृत्योद्धृत्य प्रवहति गङ्गाजले क्षिपन्नासीत् । तद्दृष्ट्वा संजातकौतुकस्तपोदत्तः सनिर्बन्धं तमपृच्छत्, ब्रह्मन् किमर्थमगणितश्रमः सिकता उद्धृत्योद्धृत्य जले क्षिपसीति । द्विजाकृतिरिन्द्रस्तमब्रवीत्, प्राणिनां तरणाय गङ्गायां सेतुं बध्नामीति । तदाकर्ण्य तपोदत्तो विहस्यावोचत, मूर्ख, किं केनाप्योघहार्याभिः सिकताभिर्गङ्गायां सेतुर्बध्येत? किमर्थमेवं निष्फले कर्मणि आत्मानं वृथा खेदयसीति । इन्द्रस्तं प्रत्यवदत्, यद्येवं वेत्सि तर्हि विना

पठनं श्रुतं वा कुतस्त्वं विद्यां साधयितुमुद्युक्तोऽसि? अध्ययनं विना विद्यासिद्धिर्यदि भवेत् तर्हि लोके कोऽपि जनो नाधीयीत इति । तच्छ्रुत्वा तपोदत्तः सम्यग्विचार्य अध्ययनादिनैव विद्या साधनीयेत्यालोच्य तपसो निवृत्य गृहं ययौ । अथोपाध्यायसविधं गत्वा स विद्यामध्येतुमारभत, क्रमेण विद्यामधीत्य प्रसिद्धिमलभत ।

११जून१९३२

## २३. संभाषणम् ॥

---

**कनिष्ठः** हे भ्रातः, पश्य, वीथ्यां कश्चन शकटो गच्छति, तस्य पश्चात्केचन गुलिकाप्रक्षेपणोमादाय यान्ति । किं तस्मिन्शकटे विद्यते? के ते? क्व ते गच्छन्ति?

**ज्येष्ठः**—शकटे व्याघ्रः, ये गुलिकाप्रक्षेपणमादाय गच्छन्ति, ते समीपवर्त्यरण्यस्थितमेकं व्याघ्रं गुलिकाप्रक्षेपणेन व्यापाद्य राज्ञः समक्षं नयन्ति, यतो राजा मनुष्यादिघातुकान् व्याघ्रादिदुष्टमृगान् ये घ्नन्ति तेभ्यः पारितोषिकं ददाति ।

**कनिष्ठः**—मया व्याघ्रो न दृष्टपूर्वः, तत्कथयतु भवान्, को व्याघ्रः? कीदृशस्तस्याकारः?

**ज्येष्ठः**—व्याघ्रः श्वापदेष्वेकतमः, आकृतौ स बिडालसदृशः। परं तु स बिडालाद्बृहत्तमः क्रूरतमो बलिष्ठश्च ।

**कनिष्ठः**—व्याघ्रः किं खादति ?

**ज्येष्ठः**—मांसमेव तस्य खाद्यम्, स गवाश्वरासभादीन् व्यापाद्य तेषां मांसानि खादति ।

**कनिष्ठः**—क्व गवादयो लभ्यन्ते, कथं स तान्हन्ति?

**ज्येष्ठः**—यदा नद्यां तटाकादौ वा जलं पातुं गवादिमृगाः आगच्छन्ति, तदायं व्याघ्रस्तान्प्रतीक्षमाणो निलीनस्तिष्ठति, आगच्छन्तं मृगं यदि पश्येत्तदा निःशब्दं तमुपसृत्य एकेनैव प्लुतेन तदुपरि निपत्य तं विदारयति ।

**कनिष्ठः**—मनुष्यानपि किं व्याघ्रो हन्यात् ?

**ज्येष्ठ**—व्याघ्रेण मनुष्यरुधिरं सकृदास्वादितं चेत्तदा ग्रामादिसमीपमागत्य मनुष्यान् हन्तुं प्रतीक्षमाणास्तिष्ठेत् । अनास्वादितमानुषरुधिरस्तु प्रायशो मनुष्यान्न हन्ति ।

**कनिष्ठः**—मनुष्यः कथं व्याघ्रान् हन्ति ?

**ज्येष्ठः**—अरण्ये यत्र कुत्रचिद्व्याघ्रोऽस्तीति ज्ञाते,

अनेके जनाः गुलिकाप्रक्षेपणीरादाय वनं गत्वा क्व व्याघ्रस्तिष्ठतीति ज्ञातुं प्रथमं शुनकान् प्रेषयन्ति । अनन्तरं पाषाणप्रक्षेपादिना पटहताडनध्वन्यादिना वा व्याघ्रं बहिर्निर्गमयितुं यतन्ते । बहिर्निर्गतं तं गुलिकाप्रक्षेपणैः घ्नन्ति । १९जून१९३२

## २४. कश्चन श्रमणः ।

कस्मिंश्चिद्विहारे मूढधीः श्रमणः कश्चिद्बभूव । स जातु रथ्यायां भ्रमन् शुना जानुन्यदश्यत । श्वदष्टः स श्रमणो विहारमुपागत्य व्यचिन्तयत्, तव जानुनि किं वृत्तमिति इह मामेकैकोऽपि प्रक्ष्यति, तदा कियतोऽहं कियच्चिरं प्रत्याययिष्यामि, तदत्र सर्वान्सकृद्बोधयितुमेकमुपायं करोमीति । एवं विचिन्त्य द्रुतं विहारोपरि समारुह्य मूढः स भिक्षुः पटहमवादयत् । पटहध्वनिं श्रुत्वा आश्चर्येण मिलिता भिक्षवः किमकाले पटहमकारणं वादयसीति तं पप्रच्छुः । शुना दष्टं मे जानु, तदेकैकस्यापि पृच्छतः कियदहं ब्रुवे इति यूयं मया संघटिताः तत्सर्वे यूयं समं बुध्यध्वं मम जानु पश्यतेति श्व…

आनु दर्शयन् तान् भिक्षून्प्रत्यब्रवीत् । ततस्ते भिक्षवः इयन्मात्रे कियामनेन संरम्भः कृत इति जहसुः ।

२१ जून १९३२

## २५. ब्राह्मणो नकुलश्च ॥

बभूव देवशर्माख्यो ब्राह्मणो नगरे क्वचित् ।
तस्याभूद्देवदत्तेति गेहिनी सदृशान्वया ॥ १ ॥

धृतगर्भा च सा तेन कालेन सुषुवे सुतम् ।
दरिद्रोऽपि स तं मेने निधिं लब्धमिव द्विजः ॥

सूतकान्ते च सा तस्य भार्या स्नातुमगान्नदीम् ।
देवशर्मा तु तस्थौ स गृहे रक्षन्सुतं शिशुम् ॥ ३ ॥

तावदाह्वायिका तस्य राजान्तःपुरतो द्रुतम् ।
चेटिका ब्राह्मणस्यागात्स्वस्तिवाचनजीविनः ॥

ततः स दक्षिणालोभान्नकुलं रक्षकं शिशोः ।
स्थापयित्वा ययौ गेहे चिरमाबाल्यवर्धितम् ॥ ५ ॥

तस्मिन्गतेऽथाकस्माच्च शिशोस्तस्यान्तिकागतम् ।
सर्पमालोक्य नकुलः स्वामिभक्त्या जघान तम् ॥

अथ तं देवशर्माणमागतं वीक्ष्य दूरतः ।
सर्पास्रसिक्तो नकुलो हृष्टोऽस्य निरगात्पुरः ॥ ७ ॥

स देवशर्मा तद्रूपं तं दृष्ट्वैवाश्मनावधीत् ।
ध्रुवं स बालः पुत्रो मे हतोऽनेनेति संभ्रमात् ॥ ८ ॥
प्रविश्य चान्तर्दृष्ट्वा तं भुजङ्गं नकुलाहतम् ।
जीवन्तं च स्थितं बालं ब्राह्मणोऽन्तरतप्यत ॥ ९ ॥
अविचार्योपकारी स नकुलः किं हतस्त्वया ।
इत्युपालभतायाता भार्यापि तद्वेत्य तम् ॥ १० ॥
तस्मान्न बुद्धिमान्कुर्यादविचार्य च किंचन ॥

२३ जुन १९३२

## २६. पशवः

प्रायशः पशूनां गात्रेषु सर्वत्रापि निबिडानि दीर्घाणि च तनूरुहाणि सन्ति । अत एव वस्त्राद्याच्छादनं विनापि शीतवातादिबाधां सोढुं शक्ता भवन्ति । सिंहव्याघ्रवृकादयः गजाश्वगवादयश्च पशवः । पशवो मृगशब्देनापि व्यवह्रियन्ते । पशुषु केचनाश्वा इवैकशफवन्तः, केषांचन मृगाणां गोरिव विभक्तौ द्वौ शफौ वर्तेते । इतरेषां तु बिडालस्येव नखरा अङ्गुलयश्च सन्ति । येषां मृगाणां शृङ्गे स्तः ते द्विशफवन्तः ॥

पशुषु सिंहव्याघ्रवृकादिदुष्टजन्तवो हिंस्रा इति श्वापदा इति च कथ्यन्ते। सिंहादयः गजादीन् हत्वा तेषां मांसादिकमेव खादन्ति। गजाश्वगवादयस्तु तृणपत्रादीनेव खादन्ति। पशुषु गवादयो मनुष्याणामतीवोपकारकाः। गौः मधुरं क्षीरं ददाति। बलीवर्दरासभादयः शकटादिकं वहन्ति। अश्वः स्वपृष्ठारूढान् ग्रामान्तरं नयति। श्वा दस्युभ्यो गृहं रक्षति। बिडालो मूषकबाधां निवर्तयति। मेषादयः शूद्रादीनामाहाराय भवन्ति। एवमेते मृगा मानुषानतीवोपकुर्वन्ति। किं च व्याघ्रादय इव प्राणिनां कामपि बाधां न कुर्वन्ति॥



## २७. कश्चन पान्थः॥

---

एकदा अध्वश्रान्तः कश्चन पान्थो मार्गसमीपवर्तिनः कस्यचिद्वटवृक्षस्य छायायामशयिष्ट। स भूमौ शयान एव पक्वफलभरितं तं वृक्षं विलोक्य मनस्येवमाचिन्तयत्, शाखोपशाखाभिरुपेतस्य महतोऽस्य वृक्षस्य फलानि कियन्त्यल्पानि, भूमावेव प्रसरणशीलायाः सकृत्पादाभिघातेनापि म्लानिमुपगच्छन्त्याः

कूश्माण्डलतायाः फलानि कियन्ति स्थूलानि ; सर्वज्ञः सर्वशक्तिमानीश्वरः कश्चनास्ति, तेनैवेदं जगत्सृष्टमिति जना वदन्ति ; सर्वज्ञः कश्चन भगवानस्ति चेत्तर्हि तेन वृक्षलतादीनां तत्तदाकारानुगुणमेव फलादिकं सृष्टं भवेत् ; महतो वृक्षस्य क्षुद्रं फलम्, क्षुद्राया लताया महत्फलं स्रष्टुं स किं मूढः ? एतावदपि स किं न जानाति ? अत ईश्वर एव नास्तीति मम मतिरिति ॥

तस्मिन्नेवं चिन्तयति, वातप्रचलितायाः कस्याश्चन शाखाया एकं फलं प्रभ्रश्य तस्य भ्रूप्रदेशे न्यपतत् । स तत्क्षणमुत्थाय करेण भ्रुवं परिमृजन् पुनश्चिन्तितवान्, अल्पफलपतनादेव मम कापि क्षतिर्नोत्पन्ना, यदि कूश्माण्डफलसदृशं फलं पतितं स्यात्तदा मम शिर एव भिन्नं भवेत् ; अतोऽहमेव मूढः, यस्मादहमीश्वर एव नास्ति, स वृक्षलताद्याकारानुगुणं फलं नास्राक्षीदित्यमंसीति ॥ ३०जुन१९३२

## २८. काकः सर्पश्च ॥

---

कस्यचिन्नगरस्य समीपस्थितायाः नद्यास्तीरे कश्चन महानश्वत्थवृक्षस्तस्थौ । तस्योन्नतशाखायां

विरचितनीडौ कौचन काकदम्पती न्यवसताम् । तस्यैव वृक्षस्याधोभागवर्तिनि कोटरे कश्चन सर्पो निवसति स्म । स सर्पः पदे पदे कुलाये काकयोरनवस्थानवेलायां कुलायं गत्वा काकाण्डानि निगिरन्नतिष्ठत् । एवमसकृत्सर्पक्रियमाणस्वाण्डनाशेन भृशं दुःखिता काकस्त्री मनस्यचिन्तयत्, यावदयं नृशंसः सर्पः अस्मिन्कोटरे निवसति तावन्मम शावका न जीवन्ति, अतः केनाप्युपायेनायं व्यापादनीय इति । एवं विचिन्त्य सा तन्नाशोपायमन्विष्यन्ती तस्थौ ॥

अथैकदा कस्मिंश्चित् पुण्यदिने राजमहिषी सपरिवारा स्नानार्थं नदीमागत्य स्वाभरणानि तीरे निधाय नदीमवातरत् । तदा वृक्षाग्रे स्थिता काकस्त्री अयमेव सर्पं घातयितुमवसर इति मत्वा पश्यन्त्या एव राजमहिष्याः तीरस्थापितेष्वाभरणेषु एकमनर्घं चञ्च्वा गृहीत्वा सर्पावासभूते कोटरे निभृतं निधाय कुत्राचिदडयिष्ट । तद्दृष्ट्वा राजमहिषी स्वाभरणमानेतुं भटानादिशत् । तेषु वृक्षमारुह्य कोटरं पश्यत्सु कोटरात्सर्पः शिर उदयच्छत् । तं ते विलोक्य लगुडेन व्यापाद्य कोटरगतमाभरणं गृहीत्वा राजमहिष्यै समर्पयामासुः । तदारभ्य काकदम्पती भयरहितौ सुखेन न्यवसताम् । एवं चतुरा उपायेन विपदं निवारयन्ति ॥ २ जुलाई १९३२

## २९. विस्मृतमार्गः कश्चन मूर्खः ॥

कश्चन मूर्खः कदाचित्स्वग्रामाद्ग्रामान्तरं गत्वा प्रतिनिवर्तमानो मार्गान्तरं व्रजन्निजग्रामगामिनं पन्थानं विसस्मार। अथ पन्थानं पृच्छन्स मूढो जनैर्नदीतटस्थस्य नरोरुपरि वर्त्मना गच्छेत्यवोचि। ततः स तरुमुपगम्य एतत्पृष्ठे मे पन्था जनैरुपदिष्ट इति तस्य तरोः पृष्ठमारुक्षत्। तत्पृष्ठे सर्पतस्तस्य भारात्सा शाखा ननाम। स च तां यत्नेनावलम्बमानो न पपात, किं तु तामालम्ब्य यावदतिष्ठत् तावन्नद्यां पीतजलः कश्चन करी आधोरणेनोपरिस्थितेन सह तेन पथा आययौ। तरुशाखाग्रलम्बी मूर्खस्तं हस्त्यारोहं दृष्ट्वा सदैन्यमवोचत्, महात्मन्, मां गृहाणेति। तदाकर्ण्य हस्त्यारोहस्तं मुग्धं तरोरवतारयितुं उज्झिताङ्कुशः पाणिभ्यां तस्य पादयोरग्रहीत्। तावच्च निर्गते गजे वृक्षाग्रलम्बिनस्तस्य पादयोर्हस्तिपको ललम्बे ॥

ततः स मूर्खस्त्वरयन् हस्त्यारोहमभ्यधात्, यदि जानासि, तदा शीघ्रं यत्किंचित्त्वया गीयताम्, तव गानं श्रुत्वा कोऽप्यागत्य नौ जातिवतोऽवतारयेत्,

अन्यथा अधःपतितौ आवामियं नदी हरेदिति । एवं तेनोक्तः सः गजारोहस्तथा मञ्ज्वगायत् , यथा सः मुग्धः परं परितोषमगच्छत् । संतोषपरवशः स जडः साधुवादं ददद्विस्मृत्या उज्झितपादपो द्वाभ्यां हस्ताभ्यां करतालिकां दातुं प्रावर्तत । अथ तत्क्षणं सहस्त्यारोहः स नद्यां निपत्य विपेदे । एवं मूर्खैः सङ्गः कस्य शर्मणे भवति ?

४ जुलाई १९३२

## ३०. काञ्चन चण्डालकन्यका ॥

---

अभूद्रूपवती कापि मुग्धा चण्डालकन्यका ।
सार्वभौमवरप्राप्तौ संकल्पं हृदि साकरोत् ॥ १ ॥

सा जातु दृष्ट्वा राजानं नगरभ्रमानिर्गतम् ।
सर्वोत्तमं भर्तृबुद्ध्या ह्यनुयातुं प्रचक्रमे ॥ २ ॥

तावदागात्पथा तेन मुनिस्तस्य प्रणम्य सः ।
पादौ गजावरूढः सन्राजा स्वभवनं ययौ ॥ ३ ॥

तद्दृष्ट्वा राजतोऽप्येनं विचिन्त्य मुनिमुत्तमम् ।
चण्डालकन्या राजानं त्यक्त्वा सा मुनिमन्वगात् ॥

मुनिः सोऽपि व्रजन्दृष्ट्वा शून्यमग्रे शिवालयम् ।
न्यस्तजानुः क्षितौ तत्र शिवं नत्वा ययौ ततः ॥

तद्वीक्ष्य सान्त्यजा मत्वा मुनेरप्युत्तमं शिवम् ।
भर्तृबुद्ध्या मुनिं त्यक्त्वा देवं तत्रैव शिश्रिये ॥

क्षणाच्चात्र प्रविश्य श्वा देवस्यारुह्य पीठिकाम् ।
जङ्घामुत्क्षिप्य जातेर्यत्सदृशं तस्य तद्व्यधात् ॥

तद्विलोक्यान्त्यजा मत्वा देवाच्छ्वानं तमुत्तमम् ।
यान्तमेवान्वगात्सा च त्यक्त्वा देवं पतीच्छया ॥

श्वा चागत्यैव चण्डालगृहं परिचितस्य सः ।
चण्डालयूनः प्रणयाल्लुलोठैकस्य पादयोः ॥ ९ ॥

तदालोक्योत्तमं मत्वा शुनश्चण्डालपुत्रकम् ।
स्वजातितुष्टा वव्रे सा तमेव पतिमन्त्यजा ॥ १० ॥

एवं कृतपदा दूरे पतन्ति स्वपदे जडाः ॥

६ जुलाई १९३२





## ३१. उष्ट्रः ॥

उष्ट्रः उन्नततरो मृगः ; तस्य ग्रीवा अतिद्राघीयसी, मस्तकस्त्वल्पः, आकारश्चातिविकृतः। विकृतदर्शनोऽप्युष्ट्रः जनानतीवोपकरोति। भूखण्डस्य केषुचिद्भागेषु महान्तो मरुप्रदेशा वर्तन्ते। तत्र गृहाः वृक्षास्तृणानि च न सन्ति। किंतु यावद्दृष्टिप्रसरं वालुकाः पाषाणशकलाः शिलोच्चयाः केवलं दृश्यन्ते। पान्थैस्तादृशप्रदेशो न द्वित्रदिनैरतिक्रमितुं शक्यः; किं तु बहुभिर्दिवसैः। अतस्तैः स्वेषाम्, ये तैः सह गच्छन्ति तेषां च कृते, बहुदिनभोज्यमन्नम्, बहुदिनपेयं पानीयं च नेतव्यम्। अश्वा वृषभादयो वा भारमूढ्वा न तादृशं प्रदेशमतिक्रमितुं समर्थाः। किं तूष्ट्र एक एव तमतिक्रमितुं शक्तः। यथा नाविकाः स्वापेक्षितानि वस्तून्यादाय नावा समुद्रं तरन्ति, तथा पथिका उष्ट्रेणैतादृशं मरुप्रदेशं तरन्ति। अत एव स मरुपोत इति कैश्चित्कथ्यते॥

कतिपयदिनानि विनाप्याहारमुष्ट्रः पथि गन्तुं शक्तः। मध्ये जलपानमन्तरेण बहुदिनपर्यन्तं पथि गन्तुं तस्यानन्यसाधारणी शक्तिरस्ति। स प्रस्थानात्पूर्वमेव षट्सप्तदिनपेयं पयः सकृदेव पिबति। अतः कतिपयदिनानि जलं विना गन्तुं शक्नोति॥

उष्ट्रोऽपि गज इव स्वपृष्ठे भारारोपणसमये पृष्ठाद्भारावरोपणसमये च ग्राहितसंज्ञः स्वजानूनि भूमौ निधायावाङ्मुखः शेते। आरोपिते अवरोपिते वा भारे उत्तिष्ठति। अस्मद्देशे तुरगः स्वामिनं वहति। गौः क्षीरं ददाति। मेषः कम्बलाद्यर्थं लोमानि ददाति। अराब्देशे तु उष्ट्र एक एव सर्वकार्यसमर्थो भवति। स भारं वहति। तस्य क्षीरं तद्देशीयाः पिबन्ति। तस्य लोमभिः कम्बलादीनि वयन्ते। मृते तस्मिन् तस्य मांसानि खादन्ति॥ ८ जुलाई

## ३२. द्विजशूद्रौ॥

एकस्मिन्ग्रामे वामदेव इति कश्चन द्विजोऽवर्तत। स चैकदा संध्यासमये बहिर्द्वारवेदिकायामुपविष्टस्तस्थौ। तदानीमध्वश्रान्तः कश्चन शूद्रः पिपासया

बुभुक्षया च पीड्यमानस्तं द्विजमभिगम्य किंचिदन्न-मयाचत । स तु अन्नं नास्ति गच्छ गच्छेत्यवदत् । पुनः शूद्रस्तमब्रवीत्, अहं भृशं तृषार्तोऽस्मि पानीयं वा देहीति । तच्छ्रुत्वा द्विजः, भ्रष्ट, किमपि नास्ति, अपेह्यपेहीति परुषमभाषत । तत्परुषभाषणमाकर्ण्य, खिन्नः शूद्रः कुत्रचिज्जगाम ॥

गतेषु कतिपयेषु दिनेषु, एकस्मिन्दिने स एव द्विजो नष्टं स्वीयमश्वं गवेषयितुं समीपस्थं वनमग-मत् । स तत्राश्वं सुचिरमन्विष्याप्यनासादयन्, भ्रष्टपथस्ततस्ततो भ्रमन्, अन्ततः कंचन शूद्रकुटी-रमपश्यत् । स तं प्रविश्य तत्रस्थं कंचन पुरुषं स्व-ग्रामगामिनं पन्थानमपृच्छत् । स तमवदत्—त्व-द्ग्रामो बहुदूरे वर्तते, सूर्यस्त्वस्तसमीपे तिष्ठति, अन्ध-कारागमनात्पूर्वं भवद्ग्रामो न प्राप्तुं शक्यते, रात्रौ गमने तु वृकव्याघ्रादयः भवन्तं खादेयुः, तदत्रैव कुटीरे रात्रिं निवस, श्वः प्रभाते भवद्ग्रामं गमिष्य-सीति । तच्छ्रुत्वा तुष्टो द्विजस्तथेति तत्रैव रात्रिं नेतुमन्वमन्यत । ततः शूद्रस्तस्मै अभ्यवहर्तुं फलानि शयितुं कटं चाददात् ॥

प्रातः शूद्रः प्रथमं शयनादुत्थाय द्विजं प्रतिबोध्या-वोचत्, रविरुदयाचलमारूढः, भवतो ग्रामस्तु बहु-

दूरवर्ती, तदागच्छ, अहं भवन्तं मार्गं दर्शयामीति । एवमुक्त्वा सायुधः स शूद्रः पुरतो जगाम। द्विजस्तमनुजगाम । अनुगच्छंश्च द्विजः सूर्यालोके शूद्रं दृष्ट्वा दृष्टचरोऽयमिति मनस्यचिन्तयत्। किं तु कस्मिन्समये कुत्र मयायं दृष्ट इति तस्य स्मृतिर्नोत्पन्ना । ततो बहुदूरं गत्वा, क्रोशमात्रावशिष्टेऽध्वनि स्थित्वा शूद्रो द्विजमपृच्छत्, किं मां भवान् प्रत्यभिजानातीति । द्विजस्तं प्रत्यवोचत्— मया त्वं दृष्टचर एवासि, किं तु कदा केति नाहं स्मरामीति । शूद्रस्तमवादीत्— कतिपयदिवसात्प्राक् एकस्मिन्दिने क्षुत्पिपासापीडितमन्नं किंचिद्याचमानं यं पुरुषं बहिर्द्वारवेदिकोपविष्टो भवान् किमपि नास्त्यपेहीति परुषमुक्तवांस्तमेव मामवेहीति । तन्निशम्य अत्यन्तं व्रीडितो द्विजः अधोमुखस्तूष्णीमभूत्। ततः शूद्रः इतः क्रोशात्परतः भवद्ग्रामो वर्तते, अनेन पथा गच्छसि चेद्ग्रामं प्राप्नुया इत्युक्त्वा भूयस्तमभाषत—इतःपरं यः कोऽपि क्षुधितस्तृषितो वा त्वमन्नं जलं वा यदि याचेत, तदा यथाशक्ति तस्मै तत् देहि, नास्त्यपेहीति मावोच इति ।

१० जुलाई १९२३

## २२. अन्धः पुरुषश्च ॥

कस्मिंश्चिद्ग्रामे वृद्धः कश्चनान्ध आसीत्। स एकदा रात्रौ नद्या जलमाहृत्य जलपूर्णं घटं शिरसोढ्वा कांचित्प्रदीपिकां करे गृहीत्वा वीथ्यां गच्छन्नासीत्। तदा मार्गमध्ये तदभिमुखमागच्छन् कश्चन पुरुषस्तं विलोक्य मनस्यचिन्तयत्, वृद्धेऽस्मिन्नन्धत्वमिव मुग्धत्वमप्यस्तीति प्रतिभाति, भवत्वेनमालपिष्यामीति। एवं विचिन्त्य अन्धमपृच्छत्, स्थविर! तवाहोरात्रिश्च समाने; एवं स्थिते, अनया करस्थदीपिकया किं ते प्रयोजनमिति। अन्धस्तमवदत्—भद्रमुख! अनया दीपिकया यन्मम प्रयोजनमस्ति, तदीदृगिति ज्ञातुमसमर्थस्त्वं न सूक्ष्मबुद्धिरित्यहं मन्ये, अतोऽहं तत्प्रयोजनं कथयामि; शृणु—अस्मिन्नन्धकारे दीपिकारहितो यद्यहं जलाहरणार्थं वीथ्यां गच्छेयम्, तदा मदभिमुखमागच्छन्तो जना गवादयो वा मामन्धकारेणाजानन्तः ममोपरि निपतेयुः, तेनाहमपि पतेयम्; शिरःस्थघटोऽपि भूमौ निपत्य भञ्ज्यात्; यद्यहं दीपिकायुक्तो व्रजेयम्, तदा दीपिकालोकेनागच्छन्तं मां दृष्ट्वा दूरतो गच्छेयुः; तस्मादहं दीपिकां करे गृहीत्वा गच्छामि;

इदमेव मम दीपिकया प्रयोजनम् इति । तदाकर्ण्य स पुरुषः मनस्यचिन्तयत्, अहमेव मूढो न त्वन्धः, यदहं तत्करस्थदीपिकाप्रयोजनं ज्ञातुमसमर्थस्तमपृच्छमिति । एवं विचिन्त्य लज्जानम्रमुखस्तूष्णीमगात् ॥



## ३४. मूर्खौ शिष्यौ ॥

कस्यचिद्गुरोर्द्वौ शिष्यावन्योन्यमत्सरावभूताम् । तयोरेकस्तस्य गुरोर्दक्षिणं पादमन्वहमभ्यज्य क्षालयन्नासीत् । तथैवेतरस्तस्य वामं पादमभ्यञ्जन् क्षालयामास । जातु दक्षिणपादाभ्यञ्जकः गुरुणा ग्रामं प्रति प्रेषितोऽभूत् । तदा गुरुरभ्यक्तवामपादं द्वितीयं शिष्यं त्वमेवाद्य दक्षिणमपि पादमभ्यज्य क्षालयेत्यभ्यधात् । तच्छ्रुत्वा मूर्खः स शिष्यः स्वैरं गुरुमभाषत— अयं प्रतिपक्षसंबन्धी पादः, तदेष मया नाभ्यङ्क्ष्य इति । एवमुक्तवतस्तस्य निर्बन्धं गुरुर्यावदकरोत् तावत्स शिष्यो रोषात् गुरोस्तं विपक्षचरणं बलादाकृष्य ग्राव्णा भग्नवान् । मुक्ताक्रन्दे च गुरौ अन्यैः प्रविश्य ताड्यमानः स कुशिष्यः सशोकेन तेन गुरुणा मोचितः ॥ १२ जुलाई

अन्येद्युश्चापरः शिष्यो ग्रामादागतः गुरोस्ताम-ङ्घ्रिपीडां विलोक्य विदितवृत्तान्तः क्रुधा ज्वलन् नाहं किं तं द्विषःसंबन्धिनं पादं भनज्मीत्युक्त्वा द्वितीयं गुरोरङ्घ्रिमाकृष्य बभञ्ज । ततः सोऽप्यन्यै-स्ताड्यमानो भग्नोभयाङ्घ्रिणापि गुरुणा कृपया मोचि-तः। ततस्तौ शिष्यौ सर्वद्वेष्योपहास्यतां ययतुः। क्रमात्स्वस्थो गुरुः क्षमाश्लाघ्यो बभूव । एवमन्योन्य-विद्विष्टो मूर्खः परिजनः स्वामिनोर्थं निहन्ति न चा-त्महितमश्नुते ॥



## ३५. मुनिर्मूषिका च ॥

यादृशो यः कृतो धात्रा भवेत्तादृश एव सः ।
तथा च प्राङ्मुनिः कश्चिच्छ्येनचञ्चुच्युतांशिशुम्

मूषिकां प्राप्य कृपया कन्यां चक्रे तपोबलात् ।
वर्धितामाश्रमे तां च स दृष्ट्वा प्राप्तयौवनाम् ॥ २ ॥

मुनिर्बलवते दातुमिच्छन्नादित्यमाह्वयत् ।
बलिने दित्सितामेतां कन्यां परिणयस्व मे ॥ ३ ॥

इत्युवाच स चर्षिस्तं ततस्तं सोऽब्रवीद्रविः ।
मत्तोऽपि बलावान्मेघः स मां स्थगयति क्षणात् ॥

१४ जनवरी १९१२

तच्छ्रुत्वा त विसृज्यार्कं मेघमाहूतवान्मुनिः ।
तं तथैव च सोऽवादीत्तेनाप्येवमवादि सः ॥

मत्तोऽपि बलवान्वायुर्यो विक्षिपति दिक्षु माम् ।
इत्युक्ते तेन स मुनिर्वायुमाह्वयति स्म तम् ॥

स तथैव च तेनोक्तस्तमेवमवदन्मरुत् ।
मयापि ये न चाल्यन्ते मत्तस्त बलिनोऽद्रयः ॥

श्रुत्वैतदेकं शैलेन्द्रमाह्वयन्मुनिसत्तमः ।
तथैव यावत्तं वक्ति तावत्सोऽद्रिर्जगाद तम् ॥

मूषका बलिनो मत्तो ये मे छिद्राणि कुर्वते ।
इति क्रमेण प्रत्युक्तो दैवतैर्ज्ञानिभिः स तैः ॥ ९ ॥

महर्षिराजुहावैकं मूषकं वनसंभवम् ।
कन्यां वहैनामित्युक्तस्तेनोवाच स मूषकः ॥ १० ॥

कथं प्रवेक्ष्यति बिलं ममैषा दृश्यतामिति ।
पूर्ववन्मूषिकैवास्तु वरमित्यथ सोऽब्रवीत् ॥ ११ ॥

मुनिस्तां मूषिकां कृत्वा तस्मै प्रायच्छदाखवे ।
एवं सुदूरं गत्वापि यो यादृक्तादृगेव सः ॥१२॥

१६ जुलाई १९३२

## ३६. गौः ॥

गौः परिशुद्धः पशुः। तस्याः द्वे शृङ्गे, चत्वारः पादाः, चत्वारः खुराश्च सन्ति। गोः खुरो द्वेधा विभक्तो वर्तते। खुरस्य बहिर्भागः लोह इव कठिनः। अत एव खुरे पाषाणादिना ताडितेऽपि गोर्व्यथा न जायते। गोः पुच्छः मूलात्क्रमेण सूक्ष्मः दीर्घश्च। वालस्यान्ते बहूनि दीर्घाणि लोमानि प्ररूढानि सन्ति। गौरधिकतया तृणानि खादति। तृणखाद-नानन्तरं तिष्ठन्ती शयाना वा पूर्वमर्धखादितनिगी-र्णान् तृणाद्याहारानास्यमानाय्य पुनः सम्यक्खादि-त्वा निगिरति। एवं खादनस्यैव रोमन्थ इति नाम ॥

गौः वर्षे वर्षे प्रायशः एकैकं शिशुं सूते। गोः शिशुः वत्स इति तर्णक इति च कथ्यते। गोः स-काशाद्वयं बहूनि फलानि लभामहे। सा अस्माकं मधुरं क्षीरं ददाति। शैशवात्प्रभृति वयं तत्क्षीरं पीत्वैव वर्धामहे। अस्माभिः पीतशिष्टं क्षीरं क्वथितं तक्रमिश्रितं सद्दधिभावं भजते। वयं मन्थेन तद्दधि मथित्वा तस्मान्नवनीतमाप्नुमः। क्वथितं नवनीतं घृतं भवति। मथितोद्धृतनवनीतं दधि तक्रं भवति। क्षीरं दधि नवनीतं घृतं तक्रं च प्रत्यहमस्माकमा-

हारायोपयुक्तानि भवन्ति । किं च गोमयं गृहोपलेपनार्थं करीषमग्निप्रज्वालनार्थं चोपयुज्यते । एवं गोचर्मणा कुतूमस्त्रिकापादुकादयः, तस्या मेदसा दीपवर्त्यादयः, तस्याः शृङ्गेण त्सरुः कङ्कतिकादयश्च क्रियन्ते । तस्या मांसमपि केचन खादन्ति ॥

१८ जुलाई १९६९

## ३७. क्षीरपात्रं हरिश्च ॥

हरिः कस्मिंश्चिद्दिने सदने कन्दुकेन विहरन्नवर्तत । तस्मिन्विहरति, कश्चन बिडालो महानसाभिमुखमगच्छत् । हरिस्तं दृष्ट्वा कन्दुकेन प्रहर्तुं तस्योपरि कन्दुकं बलादक्षिपत् । वेगेन विक्षिप्तः कन्दुकः बिडालोपरि नापतत् । किं तु महानसं प्रविश्य चुल्लीस्थक्षीरपात्रोपरि निपत्य तत्पात्रमधो न्यपातयत् । तेन पात्रस्थं क्षीरं निःशेषं भुव्यस्रुस्रुवत् ॥

अनुपदमेव हरेर्भगिनी कमला अनुजेन कृष्णेन सह तत्रागत्य महानसान्निर्गच्छन्तं बिडालमपश्यत् । ततः कमला महानसं प्रविश्य अधः पातितं क्षीरपात्रं तस्माद्भूतले निःस्रुतं क्षीरं च दृष्ट्वा, पश्य, अयं बिडालहतकः क्षीरपात्रं भुवि निपात्य क्षीरमप्यस्रावयदिति सकोपमवदत् । तदाकर्ण्य हरिस्ताम-

वदत्— भगिनि! यः पयःपात्रं भुव्यपातयत् स न बिडालः किं त्वहमेव इति कुतस्त्वमेवमकार्षीरिति तया पृष्टो हरिरुदीरितवान् मय्यत्र कन्दुकेन क्रीडति बिडालो महानसं प्रविशन्दृष्टः, तमहं कन्दुकेन ताडयितुं कन्दुकं तदुपरि व्यक्षिपम्, मया विक्षिप्तेन कन्दुकेनाकस्मात्ताडितं क्षीरपात्रं भूमावपतत्, तस्मात्सर्वमपि क्षीरं असुस्रुवत् इति। तच्छ्रुत्वा सा, मया मात्रा चात्र गृहे त्वया न कन्दुकेन विहर्तव्यमित्यसकृत्कथितोऽपि त्वमत्रागत्य विहरन् क्षीरं भुव्यस्रावयः, तवैतस्या अविधेयतायाः प्रमत्ततायाश्च कृते माता त्वां ताडयिष्यति इति वदन्ती स्नानगृहमयासीत्॥

ततः कृष्णो हरिसमीपमागत्यावोचत्, हरे, किमर्थमहमेव क्षीरपात्रं भुव्यपातयमित्यवोचः, त्वं किमप्यवदन् तूष्णीं स्थितश्चेत्तदा भगिनीव मातापि बिडालेनैव क्षीरपात्रं पातितं भवेदिति संभावयेत्। यद्यहं तत्कर्ता स्यां तदा किमप्यनुक्त्वा मूकवत्तिष्ठेयम् इति। तच्छ्रुत्वा हरिरवदत्, नाहमनृतवादी भवितुमिच्छामि इति। कृष्णस्त्ववोचत्, कथमनृतवदनम्? भगिन्यां बिडालहतकः पात्रं निपात्य क्षीरमस्रावयदित्युक्तवत्याम्, कमपि शब्दमनुच्चार्य त्वया तूष्णीं स्थितं चेत्कथमनृतवदनम्? इति। हरिः

प्रत्यबोचत्, तदप्यनृतवदनतुल्यमेव, तत्कर्ताप्यनृतवाद्येव; वयं वाचेव मौनेनापि अनृतं बोधयितुं शक्नुमः, बिडालेन क्षीरपात्रं पातितमिति भाषणेन यथा भगिनीं प्रतारयितुं शक्नुयां तथा बिडालः क्षीरपात्रमपातयदिति भगिन्याः संभावनया संभाषणसमये, तद्द्रष्टुर्मम यत्तूष्णीमवस्थानम्, तेनापि तां प्रतारयितुं शक्नुयाम् इति। हरेर्माता तं निर्भर्त्सयितुमागता प्रच्छन्ना तदुक्तं श्रुत्वा भृशमहृष्यत्। अकरोच्च मनसि, दिने दिने पुत्रेण क्षीरपात्रपातनं वाभिमतं मे न त्वनृतभाषणम् इति॥

२० जुलाई १९२२

## ३८. अहितुण्डिकः सर्पश्च॥

कस्मिंश्चिद्ग्रामे कश्चनाहितुण्डिको बभूव। स जातु आत्मजीविकासाधनभूतस्य सर्पस्य दैववशान्मृतत्वेनान्यं कंचन सर्पमासादयितुकामो वनमगच्छत्। तत्रासायमन्विष्यापि सर्पमलभमानो विफलमनोरथः स्वग्रामं प्रति निवर्तमानः अकस्मान्मार्गाभ्याशे वल्मीकं प्रविशन्तमेकं सर्पमद्राक्षीत्। हृष्टः स सर्पोपजीवी, यथात्मानं स न दशेत्, तथा युक्त्या तं गृहीत्वा वेणुनिर्मितपेटिकायां प्रवेश्य, तां पिधाय

स्कन्धेनोढ्वा कंचिदध्वानमत्यक्रामत्। ततो निशागमेन अन्धकारे गन्तुमक्षमो मार्गाभ्याशवर्तिनमेकं देवालयं प्रविश्य तत्र निशां नेतुकामः सर्पपेटिकां कुत्रचिन्निधाय स्वयं भुवि तत्राशयिष्ट। सर्पस्य कृते कान्तारचिरसंचरणश्रमजनितेन ज्वरेण पीड्यमानः परेद्युरपि ततो गन्तुमशक्नुवंस्तत्रैवातिष्ठत्। तदा दिनद्वयमाहाराभावेन क्षुधयात्यन्तं पीड्यमानः पेटिकान्तर्गतः सर्पो मनस्यचिन्तयत्, कथं ममैतादृशं कष्टमापतितम्, आहारमनश्नतो मम दिनद्वयं व्यतीतम्, आत्मानमेतत्पेटिकाया विमोच्य बहिर्गन्तुमशक्तोऽस्मि, इहैव पिण्डीकृतशरीरस्य मम मरणमेवोपनतमिति। एवं तस्मिन्सखेदं चिन्तयति, रात्रावेक आखुस्तद्देवालयविद्यमानात्कस्माच्चिद्बिलान्निर्गत्य सर्पपेटिकां विलोक्य अस्यां धान्यादिकं निहितं भवेदिति मत्वा तां प्रवेष्टुं रन्ध्रं कृत्वा अन्तः प्राविशत्। तत्क्षणमन्तःस्थितः सर्पः दैववशान्ममैष लब्ध इति संतुष्टचित्तस्तमाखुं खादित्वा तत्कृतेनैव द्वारेण पेटिकाया निष्क्रम्य कुत्रचिदगात्। अतः पुंसां वृद्धौ क्षये च दैवमेव कारणम्। एतदर्थप्रतिपादकोऽयं श्लोकः—

भग्नाशस्य करण्डपिण्डिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः।

तृप्तस्तत्पिशितेन सत्त्वरमसौ तेनैव यातः पथा
स्वस्थास्तिष्ठत दैवमेव हि नृणां वृद्धौ क्षये कारणम् ॥

२२ जुलाई १८

## ३९. पेटारक्षका भृत्याः ॥

कस्यचिद्वणिजः कश्चन करभः पथि भारेणावसन्नो बभूव। तदा स वणिग्भृत्यानब्रवीत्, अहं गत्वा कंचनान्यमुष्ट्रं क्रीत्वा आनये, योऽस्य करभस्य भारार्धमितो हरेत्; मेघागमे, यथा जलं वस्त्रपेटाचर्माणि न स्पृशेत्तथा इह स्थितैः युष्माभिः कार्यमिति। एवमुक्त्वा भृत्यांस्तानुष्ट्रपार्श्वेऽवस्थाप्य स वणिग्जगाम। अथाकस्मादुन्नम्य घनो वर्षितुमारेभे। ततस्ते जडा भृत्याः, यथा अंभः पेटाचर्माणि न स्पृशेत्तथा कार्यमिति स्वामिना प्रोक्तमित्यालोच्य पेटाभ्यो वस्त्राणि कृष्ट्वा तैश्चर्माण्यवेष्टयन्। तेन वस्त्राणि वारिणा विनेशुः। अथ स वणिगागत्य दृष्ट्वा क्रुद्धस्तान्भृत्यानभाषत, हे पापाः! किं सकलो वस्त्रौघोऽम्भसा नाशित इति। ते तं प्रत्यभाषन्त—त्वयैवोदकात्पेटाचर्माभिरक्षणमादिष्टम्, तानि चास्माभी रक्षितानि, तत्र च कोऽस्माकं दोष इति। चर्मस्वार्द्रेषु वस्त्राणि नश्येयुरिति वस्त्राणामेव रक्षार्थं

मया तथोक्तम्, न तु चर्मणां रक्षार्थमिति तानुक्त्वा, स वणिगन्यकरभन्यस्तभारस्ततः स्वगृहं गत्वा भृत्यान्सर्वस्वमदण्डयत् । एवमज्ञातहृदया मूर्खा विपर्ययं कृत्वा स्वार्थं परार्थं च घ्नन्ति ॥

२४जुलाई१९८

## ४०. वणिक्सूनुर्लोहतुला च ॥

आसीत्कोऽपि तुलाशेषः पित्र्यार्थात्प्राग्वणिक्सुतः।
अयःपलसहस्रेण घटितां तां तुलां च सः ॥ १ ॥

कस्यापि वणिजो हस्ते न्यस्य देशान्तरं ययौ ।
आगतश्च ततो यावत्तस्मान्मृगयते तुलाम् ॥ २ ॥

आखुभिर्भक्षिता सेति तावत्तं सोऽब्रवीद्वणिक् ।
सत्यं सुस्वादु तल्लोहं तेन जग्धं तदाखुभिः ॥ ३ ॥

इति सोऽपि तमाह स्म वणिक्पुत्रो हसन्हृदि ।
प्रार्थयामास च ततो वणिजोऽस्मात्स भोजनम् ॥

सोऽपि संतुष्य तत्तस्मै प्रदातुं प्रत्यपद्यत ।
ततः स सहकृत्वास्य वणिजः पुत्रमर्भकम् ॥ ५ ॥

स्नातुं वणिक्सुतः प्रायाद्दत्तामलकमात्रकम् ।
स्नात्वार्भकं तं निक्षिप्य गुप्तं क्वापि सुहृद्गृहे ॥ ६ ॥

एक एवाययौ तस्य स धीमान्वणिजो गृहम् ।
अर्भकः क्व स इत्येकं पृच्छन्तं वणिजं च तम् ॥७॥

श्येनेन सोऽर्भको नीतः खान्निपत्येत्युवाच सः ।
छादितो मे त्वया पुत्र इति क्रुद्धेन तेन च ॥ ८ ॥

नीतः स वणिजा राजकुलेऽप्याह स तत्तथा ।
असंभाव्यमिदं श्येनो नयेत्कथमिवार्भकम् ॥ ९ ॥

इति सभ्यैश्च तत्रोक्ते वणिक्पुत्रो जगाद सः ।
मूषकैर्भक्ष्यते लौही देशे यत्र महातुला ॥ १० ॥

तत्र द्विपमपि श्येनो नयेत्किं पुनरर्भकम् ।
तच्छ्रुत्वा कौतुकात्पृष्टवृत्तान्तैस्तस्य दापिता ॥

सभ्यैस्तुला सा तेनापि स आनीयार्पितोऽर्भकः ।
इत्युपायेन घटयन्त्यभीष्टं बुद्धिशालिनः ॥ १२ ॥

२६ जुलाई १८३२



## ४१. सिंहः ॥

---

सिंहाः आफरिकादेशवर्तिष्वरण्येषु, पर्वतप्रान्तेषु च प्रचुरतया वर्तन्ते । एष्यादेशेऽपि क्वचित्प्रदेशे सन्ति । परं नु तत्रस्थाः सिंहाः आफरिकादेशवर्तिन इव स्थूला बलिष्ठाश्च न भवन्ति । सिंहो भयंकरो धीरदर्शनश्च । सिंहगर्जनं मनुष्याणामितरेषां प्राणिनां च भयं जनयति । श्वापदेषु सिंह एव बलिष्ठः । स चैकेनैव प्रहारेण तुरगादीन् प्रहृत्य व्यापादयितुं शक्नोति । बिडालो यथा मूषकमास्येन गृहीत्वा धावति, तथा सिंहोऽपि वृषभादिकमास्येन गृह्णन् पलायते । सिंहो विंशतिवितस्तिदूरवर्तिनि मृगे एकेनैव प्लुतेनोत्प्लुत्य निपतेत् । सिंहः स्वपराक्रमेण इतरानखिलानपि मृगान् हन्यात् । सिंहं तु कोऽपि

न हन्यात्। अत एव तस्य मृगरिपुरिति मृगाधिप इति मृगेन्द्र इति च प्रसिद्धिः ॥

सिंहः प्रायशो दिवा न संचरति। सूर्यास्तमयानन्तरमेव स्वावासभूताया गुहाया बहिराहारसंपादनार्थं निर्गच्छति। कदाचिद्दिवापि बहिरागत्य मृगादीन्गवेषयेत। आसन्नवर्तिनं सिंहं रासभादयो गन्धेन ज्ञात्वा पलायेरन्। केचन मृगाः सिंहगर्जनं श्रुत्वा भयभ्रान्तचित्ताः स्वयमेव तत्समीपं गत्वा तस्य खाद्या भवेयुः ॥

सिंही सिंहापेक्षया अल्पा। यथा सिंहस्य स्कन्धावलम्बिनः केसरा वर्तन्ते तथा सिंह्याः केसरा न सन्ति ॥

२८ जुलाई १९३२

## ४२. आखुसिंहौ ॥

एकदा कस्मिंश्चिदरण्ये कश्चन सिंहः स्वपन्नतिष्ठत्। तदानीं केचनाखवो विनोदार्थमितस्ततो धावमानाः सिंहशरीरे पतित्वा तं प्राबोधयन्। तेन क्रुद्धः सिंहस्तेष्वेकं करे गृहीत्वा यावद्धन्तुमारभत तावत्स आखुः सदैन्यं तं जीवितमयाचत। तेन

शान्तकोपः केसरी तमाखुं व्यसृजत् । ततः कृतज्ञः स आखुः सिंहमवदत्, मृगराज, अहं त्वां यदा कदा वा प्रत्युपकुर्यामिति प्रत्येमीति । सिंहस्तदाकर्ण्य, अल्पतमोऽयं जन्तुः कथं मामुपकुर्यादिति मत्वा तमपाहसीत् । आखुस्तु किमप्यनुक्त्वा स्वबिलं प्राविक्षत् ॥

गतेषु केषुचिद्दिनेषु जातु स एव सिंहः आहारार्थं भ्रमन्, मृगादिग्रहणार्थं व्याधैः प्रसारिते दृढतररज्जुनिर्मिते जालेऽलगत् । स तस्माज्जालादात्मानं मोचयितुं बहून् यत्नानकरोत् । तथापि तस्य यत्नः सफलो न बभूव । ततो भयेन स जगर्ज । महान्तं तस्य ध्वनिं श्रुत्वा स एवाखुः किमेतदिति जिज्ञासुर्बिलान्निर्गत्य सिंहसमीपमागत्य तमेव सिंहं जालबद्धमपश्यत् । ततः स तस्य प्रत्युपकारं चिकीर्षुस्तीक्ष्णैः स्वदन्तैः जालं छित्वा तस्मात्तममोचयत्; अवोचच्च, मृगेन्द्र, अल्पतमोऽयं प्राणी कथं मामुपकरिष्यतीति पूर्वं मामवामंस्थाः, पश्येदानीमल्पेनापि महत्कार्यं कर्तव्यमापतितमिति । एवमुक्त्वा आखुः स्वस्थानमगमत् । सिंहोऽपि संतुष्टः कुत्रचिदगात् । एवं बलिष्ठानामप्यल्पानां साहाय्यमवश्यमपेक्षितम्, अतस्तैरल्पा नावमन्तव्या इति ज्ञायते ॥

३० जुलाई

## ४३. ब्राह्मणो व्याघ्रश्च ।

---*---

एकदा कश्चन ब्राह्मणः वनमार्गेण कंचन ग्राममगच्छत्। मार्गमध्ये पञ्जरबद्धः कश्चन व्याघ्रः गच्छन्तं ब्राह्मणमाहूयावदत्, हे ब्राह्मण, पञ्जरबद्धस्य मम द्वौ दिवसावतिक्रान्तौ, तदारभ्य ममाहारो नास्ति, अतस्त्वं मयि दयां निधाय पञ्जरद्वारमपावृणुयाश्चेत्तव सुकृतं भवेदिति। तच्छ्रुत्वा ब्राह्मणस्तमवोचत्, त्वं सर्वेभ्यः प्राणिभ्यः क्रूरतमः, अपावृते पञ्जरद्वारे मामेव हन्याः, तस्माहं द्वारमपावृणोमीति। व्याघ्रस्तमब्रवीत्, मम प्राणरक्षणेन परमोपकारिणं त्वां किमहं हन्याम्? न कदापि हन्याम्; अतः पञ्जरद्वारमुद्घाट्य मां निर्गमयेति। एवं व्याघ्रेणाधिकं प्रार्थ्यमानो ब्राह्मणस्तस्य वचने विश्वस्य पञ्जरद्वारमपावृणोत्। व्याघ्रः पञ्जरान्निर्गत्य ब्राह्मणमवदत्, दिनद्वयमाहाराभावेन अहमत्यन्तं बुभुक्षितोऽस्मि, अतस्त्वां खादितुमिच्छामीति। तच्छ्रुत्वा भीतो ब्राह्मणस्तमवोचत्, उपकारिणो मम हननं किं तवोचितमिति। सोऽब्रूत, मनुष्यादिहननं व्याघ्राणां कुलधर्मः, तत्तव हननमुचितमेवेति॥

एवं तयोः परस्परं विवदमानयोः, कश्चन जम्बुकस्तत्रागच्छत् । तं दृष्ट्वा उभावपि स्वस्वविवादं तस्मायवोचेताम् । तदाकर्ण्य जम्बुकस्तावब्रवीत्, युवयोर्विवादः केवलं श्रोत्रेण श्रुत्वा न निर्णेतुं शक्यते, किं तु कथं व्याघ्रः पञ्जरे निरुद्धः कथं वा त्वया पञ्जरद्वारमुद्घाट्य व्याघ्रः पञ्जरबन्धान्मोचितः, तद्युवां मह्यं दर्शयतम्, अहं प्रत्यक्षतो दृष्ट्वा विवादस्य निर्णयं दास्यामीति । मूढो व्याघ्रस्तथैव भवत्विति प्रतिपद्य, पञ्जरं प्राविक्षत् । प्रवेशमात्रेण पञ्जरद्वारं संवृतमभूत् । ततो जम्बुको ब्राह्मणमब्रवीत्, हे मुग्धबुद्धे, कुत एनमुपकार्षीः? त्वत्कृतोपकारस्यानेन नीचेन चिकीर्षितः प्रत्युपकारः किं सम्प्रति सम्यक् ज्ञातः? इतःपरमेतादृशानां दुष्टानामुपकारं कदापि मा कार्षीः, त्वमिदानीं गच्छ; अयमत्रैव तिष्ठत्विति । एवमुक्त्वा जम्बुकः कुत्रचिदयासीत् । ब्राह्मणोऽपि गन्तव्यं स्थानं जगाम । तस्मान्नीचा नोपकर्तव्याः ॥



१अगस्त१९:

## ४४. मूर्खः कदर्यः ॥

कस्मिंश्चिन्नगरे कश्चनाढ्यः कदर्यः पुमानभूत् । महाधनस्यापि तस्य उपर्युपरि धनसंचय एवाधिका

आसक्तिरासीत्, न तु संचितधनेषु अल्पमपीतरस्मै दातुं स्वयमुपयोक्तुं वा । स चानुदिनमितोऽपि प्रचुरधनसंचयो भवत्विति लक्ष्मीं प्रार्थयमानस्तस्थौ । सापि तत्प्रार्थनानुगुणं तस्य धनमवर्धयत् ॥

एवं स्थिते कस्मिंश्चिद्दिने स कृपणः स्वस्य समग्रां धनसंपत्तिं विलोक्य मनस्यचिन्तयत्, ईदृशधनसंपत्त्या यद्यहं जातु वियुक्तः स्यां तदा कथमहं जीवेयम्, क्षणमात्रमप्येतद्वियुक्तो न जीवेयम, तस्मादियं संपन्मद्गृह एव यथा स्थिरा तिष्ठेत् तथोपायः कर्तव्य इति । स एवं विचिन्त्य तपसा लक्ष्मीमाराद्धुमारभत । ततो लक्ष्मीः साक्षादागत्य तमभाषत, अहं तव तपसा तुष्टास्मि, किं ते करवाणि इति । तां दृष्ट्वा हृष्टः स कृपणः प्रोवाच, देवि, त्वं यावन्तं कालं मम गृहे वर्तसे, तावन्तं समयमियं संपदपि मद्वशे तिष्ठेत् । मां त्यक्त्वा गतायां त्वयि, इयमपि संपदनुपदमेव गच्छेत् । तत्त्वं यदा मां त्यक्त्वा गन्तुमिच्छसि तदा त्वया प्रत्यक्षीभूय 'त्वां त्यक्त्वा गच्छामि' इति मामुक्त्वैव गन्तव्यमिति । तच्छ्रुत्वा सा तथैवास्त्वित्युक्त्वा अन्तर्हिता बभूव । अन्तर्हितायां तस्यां स लुब्धो मनस्यचिन्तयत्, त्वद्गृहान्निर्गमनसमये गच्छामीति त्वामुक्त्वैव

गच्छामीति लक्ष्म्योक्तम्, तस्या वचनं कदाप्यलीकं न भवेत्; एवं सति यद्यहं जीवंस्तिष्ठेयं तदा सा मामुपगम्य गच्छामीति मामुक्त्वा गच्छेत्, गतायां तस्यामियं संपदपि गच्छेत्, यद्यहं मृतः स्यां तदा कथं सा मां गच्छामीति वदेत्, गच्छामीति माममुक्त्वा तु तया मद्गृहान्निर्गन्तुं न शक्यते, अगतायां तस्यां, इयं संपदपि न गच्छेत्, किं तु मद्गृह एव तिष्ठेत् इति । एवमालोच्य स मूढः कस्मिंश्चिदन्धकूपे निपत्य प्राणान्विजहौ । एवं लुब्धानां प्राणेभ्योऽपि धनमेव प्रियतमम्, क्लेशार्जितं तेषां धनमन्यैर्हेलया भुज्यते ॥

६ जुलाई १९३२

## ४५. बको मकरश्च ॥

---

आसीत्कोऽपि बकः पूर्वं मत्स्याढ्ये सरसि क्वचित् ।
मत्स्यास्तत्र पलायन्त तस्य दृष्टिपथाद्भयात् ॥ १ ॥

अप्राप्नुवंश्च मिथ्या तान्स मत्स्यानब्रवीद्बकः ।
इहागतो मत्स्यघाती पुरुषः कोऽपि जालवान् ॥

स जालेनाचिराद्युष्मान्गृहीत्वा निहनिष्यति ।
तत्कुरुध्वं मम वचो विश्वासो वोऽस्ति चेन्मयि ॥

अस्त्येकान्ते सरः स्वच्छमज्ञातमिह धीवरैः ।
अहं तत्र निवासार्थं नीत्वैकैकं क्षिपामि वः ॥ ४ ॥

तच्छ्रुत्वा सभयैरूचे मत्स्यैस्तैर्जडबुद्धिभिः ।
एवं कुरुष्व विश्वस्ता वयं त्वय्यखिला इति ॥ ५ ॥

ततो बकस्तेष्वेकैकं मत्स्यं नीत्वा शिलातले ।
विन्यस्य भक्षयामास स बहून्विप्रलम्भकः ॥ ६ ॥

दृष्ट्वा मीनान्नयन्तं तं मकरस्तत्सरोगतः ।
एको बकं तं पप्रच्छ नयसि क्व झषानिति ॥ ७ ॥

ततस्तं स तदेवाह बको मत्स्यानुवाच यत् ।
तद्भीतो मकरोऽवोचत्तन्मामपि नयेति तम् ॥ ८ ॥

सोऽपि तन्मांसगर्धान्धबुद्धिरादाय तं बकः ।
उत्पत्य प्रापयति तद्यावद्वध्यशिलातलम् ॥ ९ ॥

तावत्तज्जग्धमीनास्थिशकलांस्तत्र वीक्ष्य सः ।
तं बुध्यते स्म मकरो बकं विश्वासघातुकम् ॥

ततः शिलातलन्यस्तमात्रस्तस्य स मस्तकम् ।
बकस्य मकरो धीमांश्चकर्ताविह्वलः क्षणात् ॥११॥

गत्वा पुनः शेषमत्स्यान्यथावत्स शशंस तम् ।
ते चाप्यभिननन्दुस्तं झषाः प्राणप्रदायिनम् ॥१२॥

तस्मात्प्रज्ञाबलं नाम निष्प्रज्ञस्य बलेन किम् ।

८ अगस्त १८९२



## ४६. शुकः ॥

शुकाः प्रायशः उष्णदेशे निवसन्ति । शुका नानाविधाः । तेषु केचन हरितवर्णाः केचन रक्तवर्णाः केचन धूसरवर्णाश्च । तेषां पक्षा उज्ज्वला मनोज्ञाश्च । शुकस्य चञ्चुः प्रायशो रक्ता बृहती दृढा वर्तुला च । तस्या उपरितनभागः अधोभागापेक्षया आयतो वक्रस्तीक्ष्णाग्रश्च । शुकस्य जिह्वा कोमला मांसला च । तस्य पुच्छो दीर्घः । शुकस्य पादौ स्वावासभूतं

तृणादि ग्रहीतुम्, हस्ताविवाहारभूतवस्तून्यास्यं नेतुं चोपयुक्तौ स्तः। तस्य पादयोः पुरोभागे पश्चाद्भागे च सनखरे द्वे द्वे अङ्गुली स्तः। शुकश्चञ्चुचरणसाहाय्येन वृक्षादीनारोढुं शक्नोति ॥

शुकाः स्वजातीयसंसर्गप्रियाः । अत एव ते आरामादिषु सङ्घशो डयमाना दृश्यन्ते न त्वेकैकशः। शुकः वृक्षकोटरे पाषाणच्छिद्रादौ अण्डानि सूते, अण्डान्निर्गमनात्परं बहूनि दिनानि शुकशावकाः पक्षशून्या एव वर्तन्ते । मासत्रयानन्तरमेव सम्यक्प्ररूढपक्षा डयनयोग्याश्च भवन्ति । शुकः प्रायशः फलादीनि खादति । कदाचित्पक्वान्नादिकमपि खादेत् । तस्य शर्करायामतीव प्रीतिः। शुकः पदे पदे जले स्नाति । घर्मकाले जलमवगाह्य पक्षपुटेन जलमादाय स्वस्योपरिभागं सिञ्चति । शुको बहुकालजीवी । पञ्चाशद्वत्सरादूर्ध्वमपि जीवतीति केचन वदन्ति । अस्माभिरुच्चार्यमाणानां वचनानामनूच्चारणे बिडालशुनकादीनां ध्वन्यनुकरणे च शुकाः अतीव ख्याताः ॥ १० अगस्त १८३२



## ४७. कश्चन बालकः शुकशावकश्च ॥

---

अहमेकदा प्रातःकाले विनोदार्थं पुष्पवाटिकामगमम्। तस्यां च कस्यचिदुन्नतचूतवृक्षस्य शाखाग्रेषु विरचितनीडाः शुका निवसन्ति स्म। तस्मिन्समये कश्चन व्याधस्तत्रागत्य तं पादपमारुह्य शुकशावकानग्रहीत्। ग्रहणसमये तेष्वेकः शावको नीडात्प्रभ्रश्य भूमावपतत्। पतितं शावकं व्याधो नालक्षयत्। वायुपुञ्जितस्य शुष्कपत्रस्य पुञ्जे पतिततया स शावको गतासुर्नाभूत्। व्याधस्तु वृक्षादवतीर्यायासीत्। अथाहं तं शावकं रिरक्षिषुस्तमादाय गृहमगमम्। कदाचिद्बिडालो गृहीत्वा खादेदित्यालोच्य तदानीमेवैकं दारुपञ्जरं कारयित्वा तस्मिंस्तं प्रवेश्य द्वारं पिधाय प्रयत्नेनापोषिषम्। स एवं पुष्यमाणः समुत्पन्नपक्षः कालेनाल्पेनैव तथा परिचितोऽभूत्, यथा कदाचिदपावृते पञ्जरद्वारे स बहिरागत्य गृहाभ्यन्तर एव इतस्ततो डयमानः ममोत्सङ्गे समुपविश्य हस्तस्थितं फलादिकं चञ्च्वा गृहीत्वा खादेत्, कदाचिन्मया एह्येहीत्याहूते झटित्यागत्य ममाङ्गुलौ निषीदेत्। अहमधिकं तस्मिन्नस्निहम्; अतो मत्तः स नाभैषीत्॥

किं च यदा यदा ममावकाशो लभ्यते तदा तदा अहं तं कानिचिद्वाक्यानि अशिक्षयम् । मयैवं शिक्षितः कानिचिद्वाक्यानि मनुष्य इव स्पष्टमुच्चारयितुं शक्तोऽभूत् । प्रत्यहमहं पाठशालातः प्रतिनिवृत्य तेनोच्चार्यमाणानि वाक्यानि शृण्वन् कंचित्कालमात्मानं विनोदयन्नतिष्ठम् । एवं गतेषु कतिपयदिनेषु, एकस्मिन्दिने प्रमादादपावृतद्वारात्पञ्जरान्निर्गत्य स शुकः समीपवर्ति वनमगमत् । अहं शुकरहितं पञ्जरं दृष्ट्वा अयं कुत्रचिद्गतो भवेत्, कंचित्कालं बहिः संचर्य पुनः प्रत्यागच्छेदित्यमंसि । अतीतेष्वपि चतुःपञ्चदिनेषु यदा स नागतः तदाहं केनाप्यन्येन वायं गृहीतो भवेत्, अथवा बिडालेन वा व्यापादितो भवेदित्यालोच्य खिन्नमनास्तूष्णीमभूवम् ॥ खिन्न

तदनु कतिपयदिवसानन्तरमेकदाहं मदपवरके आसनोपविष्टः पठन् अपि कुशलं भवत इति केनचिदुक्तं वाक्यमश्रौषम् । तच्छ्रुत्वा कोऽपि द्वारदेशमागत्य मामालपतीति मत्वा आसनादुत्थाय बहिर्गत्वा व्यलोकयम् । कोऽपि तत्र नासीत् । किमेतदिति चिन्तयन् प्रतिनिवृत्त्यासने समुपाविक्षम् । ततः क्षणात्परम्, ईश्वरस्त्वां सपुत्रकलत्रमवत्विति पुनरन्यद्वाक्यं श्रुतिपथमगच्छत् । तेनात्यन्तं विस्मयापन्नो

यद्वृक्षशाखावलम्बितं पञ्जरमद्राक्षम्। तस्मिन्नस एव नष्टः शुकः पञ्जरोपविष्टो मया दृष्टः। ततस्तेनैवेमे वाक्ये उक्ते स्यातामित्यशासिषम्। किं तु स शुकः कदा समागत्य पञ्जरं प्राविक्षदिति नावेदिषम्। बहुदिवसात्परं नष्टं शुकं पुनर्दृष्टवतो मम महान्विस्मयः संतोषश्चोदभूत्। अथायं पञ्जरे निरोद्धव्यः नो चेत्पलायेत इति मत्वा पञ्जरं गृहीत्वा तमन्तः प्रवेश्य पञ्जरस्य द्वारं दृढं न्यधाम्। तेन स विषण्ण इवालक्ष्यत। अथाहं निर्गत्य स्नानभोजनादिकं निर्वर्त्य पाठशालामगाम्। सायं चागत्य यथापूर्वं सादरं मयोपनीतं फलादिकं किंचित्खादित्वा विषण्ण एवातिष्ठत्, न पूर्ववत्तुष्टः। अहमपि कृताहारः शयनं श्रितोऽस्वाप्सम्॥

अथ रात्रौ स्वप्ने शुको मामेवमवादीत्, त्वद्गृहान्निर्गमनादारभ्य एतावन्तं कालमहमरण्ये विविधविहगगणाकीर्णे हृष्टमनाः स्वजातीयैः साकं स्वच्छन्दं वृक्षाद्वृक्षं डयमानः सुखं न्यवात्सम्। तत्रास्माकं खादितुं नानाविधानि मधुराणि फलानि पातुं स्वच्छानि नदीसलिलानि च सन्ति। एवं स्वेच्छया वने विहर्तुमिच्छोर्मम निरोधस्तव न युक्तः। त्वया सस्नेहं वर्धिततया तिर्यग्जातौ जातो-

ऽपि कृतज्ञोऽहं त्वां द्रष्टुमिहागतः । त्वयैवं निबद्धो भवेयमिति पूर्वमेव मया ज्ञातं चेन्नाहमिहागतो भवेयम् । किं च त्वत्पिता माता वा त्वां कस्मिंश्चनागारे निक्षिप्य अगारद्वारं पिधाय स्वेच्छया विहर्तुमगनुमस्य यदि निरोधयेत्तदा त्वं निरोधदुःखमनुभावितुं किमिच्छेः? अतः स्वेच्छया वने विहर्तुं मां विसृजेति । प्रातश्चाहं प्रबुद्धः स्वप्ने शुकोक्तं स्मृत्वा विस्मयाविष्टः शुकमुपगम्याद्राक्षम् । पूर्ववद्विषण्ण एवासीत् । अथाहं स्वेच्छयायं स्वजातीयैः सह सुखं वने विहरत्विति पञ्जरद्वारमपावृत्य तं व्यसृजम् । सोऽतीव हृष्टः समुदपतत् ॥ १२अगस्त१९३२



## ४८. कश्चन दुष्टबालकः शुनकश्च ॥

एकदा कश्चन बालकः बहिर्द्वारे सोपाने समुपविष्टः एकमपूपं खादन्नवर्तत । तदा कश्चन शुनकस्तस्यानतिदूरे वीथ्यां शयानस्तस्थौ । स बालकस्तं शुनकं दृष्ट्वा एह्येहीत्याह्वयत् । तद्वचनं श्रुत्वा स शुनकः समुत्थाय स्वलाङ्गूलं चालयन् तस्य समीपमागच्छत् । ततः स बालकः स्वकरस्थस्यापूपस्यैकं शकलं करे गृहीत्वा तस्मै शुनकायादर्शयत् । तद्दृष्ट्वा शुनके

तद्ग्रहीतुं स्वमुखं प्रसारयति, स दुष्टबालको मुष्ट्या तस्य नासिकायां दृढं प्राहरत्। तेन प्रहृतः शुनको दीर्घं विरुवन् प्राद्रवत्। तदा स नृशंसः स्वस्य दुश्चेष्टितेन उच्चैर्जहास॥

अथ दुष्टबालको यत्रातिष्ठत् तदभिमुखसदनान्तरुपविष्टः कश्चन पुरुषो गवाक्षरन्ध्रेण सर्वं तस्य दुश्चेष्टितं विलोक्य तदसहमानो बहिरागत्य तं बालकमाहूय तस्मै एकं रूपकं प्रदर्श्य गृहाणेमं रूपकमित्यवोचत्। बालकस्तद्दृष्ट्वा सत्वरमागत्य तं ग्रहीतुं यावद्धस्तं प्रासारयत्, तावत्स पुमान् स्वहस्तवर्तिना दण्डेन तस्याङ्गुलिपर्वणि दृढं प्राहरत्। तदा बालकः शुनक इव रुदन् हस्तेन हस्तं घर्षन्नवदीत्, किमर्थं मां प्राहार्षीः? नाहं तव कामपि पीडामकार्षम्, न वा त्वां रूपकमयाचिषीति। पुरुषस्तं प्रत्यवोचत्, कुतस्त्वं क्षणात्पूर्वं शुनकं प्राहार्षीः? स तव कामपि बाधां नाकार्षीत्, न वा त्वामपूपमयाचिष्ट। यथा त्वमनपराधिनं प्रहृतवान्। प्रहाराद्यथा तव व्यथा समुत्पन्ना तथा शुनकस्यापि व्यथा समुत्पन्ना भवेदिति त्वमिदानीमवेहि। इतःपरमेवमनपराधि शुनकरासभादिप्राणिजातं मा हिंसीरिति॥

५ अगस्त १९

## ४९. अनृतवादी मेषपालः ॥

---

आसीद्ग्रामे कश्चित्कश्चिद्बालको मेषपालकः ।
सोऽतिष्ठच्चारयन्मेषान्संलिकृष्टवने सदा ॥ १ ॥

स जातु संभ्रमेणैत्य ग्रामस्थानब्रवीन्मृषा ।
अवास्कन्दति नो मेषान्वृकोऽभ्येत्य कुलघ्नन ॥

तद्रक्षार्थमितो यूयं समागच्छत सत्वरम् ।
समाकर्ण्याथ तद्वाक्यं सत्यं मत्वा च तत्क्षणम् ॥

रिरक्षिषन्तस्ते मेषान्गृहीत्वा लगुडादि च ।
आजग्मुस्तत्र तेऽपश्यन्मेषानेव तु केवलम् ॥

न वृकं सोऽथ तान्दृष्ट्वा जहासोच्चैर्हि बालकः ।
विनोदार्थमनेनैवं कृतं स्यादिति ते विदुः ॥ ५ ॥

अथ निर्भर्त्स्य तं बालं ततो ग्राममयासिषुः ।
दिवसेषु व्यतीतेषु स बालः सत्यमागतम् ॥ ६ ॥

वृकं दृष्ट्वा भयभ्रान्तस्त्वरितं ग्राममाययौ ।
आगतो वृक इत्येवं सोऽब्रवीद्ग्रामवासिनः ॥ ७ ॥

श्रुत्वा ते तस्य तद्वाक्यं प्रत्यवोचंस्तदा जनाः ।
मूर्ख त्वया वयं भूयो न प्रतारयितुं क्षमाः ॥ ८ ॥

गच्छ गच्छेति तैरुक्तः स बालः पुनरब्रवीत् ।
नेदानीमनृतं वच्मि किं तु सत्यं वदाम्यहम् ॥९॥

इत्येवं बहुधा तेन कथिता अपि ते जनाः ।
पूर्ववद्वितथं मत्वा तद्वाक्यं न विशश्वसुः ॥ १० ॥

वृकोऽथ मेषान्सुबहून्हत्वा कामं वनं ययौ ।
मेषनाशं जनाद्बुद्ध्वा स्वामी बालाय चुक्रुधे ॥ ११ ॥

क्रोधाच्च स्वामिनो बालः पदाद्भ्रष्टो बभूव सः ।
हास्यार्थं वाप्यतो वाच्यं नानृतं भूतिमिच्छता ॥

स्वामिनो महती हानिः स्वस्यापि हि पदच्युतिः ।
संजाता मेषपालस्य परिहासमृषागिरा ॥ १२ ॥

१८ अगस्त



## ५०. कोकिलः ॥

कोकिलः काक इव न स्थूलः । स नीलमिश्रधूसरवर्णः । तस्य पक्षपुच्छौ नीलौ । पक्षस्य ह्रस्वतया बहुदूरं डयितुं स न शक्नोति । तस्य चञ्चुः काक-

चञ्चुरिव नताग्रा दीर्घा च । स तया मक्षिकाः कीटादींश्च सहसा गृह्णाति, धान्यं फलादिकं च लुनाति । स कीटादीन् धान्यफलादिकं च खादति । कोकिलो रुचिरं गायति । स प्रायशो वसन्तसमय एव दृश्यते, यतो वयं तस्य मनोहरं शब्दं तदानी-मेव शृणुमः ॥

कोकिला अण्डानि प्रसवितुमितरविहगा इव न नीडं निर्मिमीते । सा नीडं निर्मातुमशक्ता वा आल-स्येन न निर्मिमीते वा तन्न जानीमः । अतः काक-स्त्रियां स्वाण्डानि नीडे निधायाहारान्वेषणाय बहिर्ग-तायाम्, इयं कोकिला स्वाण्डानि चञ्च्वा गृहीत्वा काकस्त्रीनीडे निक्षिप्य गच्छति। पिकाण्डानां प्रायशः काकाण्डसदृशतया तानि न मदीयानीति काकस्त्री कथं ज्ञातुं शक्नुयात् । सा तानि स्वीयानीति मत्वा तेषूपविश्य तावत् तान्युष्णीकरोति, यावदण्डेभ्यः शावका न निर्गच्छन्ति । ततः पिकशावका अण्डे-भ्यो बहिर्निर्गत्य काकस्त्रियोपनीतेनैव फलाद्याहारेण वर्धमानस्तस्मिन्नेव नीडे तावन्निवसन्ति, यावत्प्ररू-ढपक्षा डयितुमाहारादि संपादयितुं च न शक्नुव-न्ति । प्ररूढपक्षास्तु स्वीयैः कोकिलैरेव मिलन्ति । अत एव कोकिलाः परपुष्टा इति भण्यन्ते ॥

२० अगस्त १६

## ५१. कनकदत्तः ॥

सोमपुरनाम्नि नगरे कनकदत्ताख्यः कश्चन वैश्यो ऽवर्तत। गर्भस्थस्यैव तस्य पिता मृतिमगच्छत्। ततः पापास्तस्य ज्ञातयः पैतृकं सर्वमपि धनमपाहरन्। तद्दृष्ट्वा गर्भिणी तस्य जननी, ते अन्यदप्यनिष्टं कुर्युरिति भीत्या स्वपतिमित्रस्य कुमारदत्तस्य गृहं गत्वा तत्रैवात्मनो गर्भं रक्षन्ती तस्थौ। ततः सा कालेन कनकदत्तं प्रसूय कृच्छ्राणि कर्माणि कुर्वन्ती तमवर्धयत्। विद्याभ्यासयोग्यां दशामापन्ने कनकदत्ते, सा कंचनोपाध्यायमभ्यर्थ्य तस्माल्लिपिं गणितादिकं च पुत्रमध्यापयामास ॥

अथैकदा सा अधीतविद्यं धनार्जनयोग्यां वयो ऽवस्थामापन्नं पुत्रं दृष्ट्वा एवमब्रवीत्, पुत्रक, अस्मिन्नगरे विशालाखिलाख्यः कश्चन महाधनो वणिगस्ति, स दरिद्राणां कुलीनानां वणिजां भाण्डमूल्यं ददाति, वणिक्पुत्रतया त्वमपि तत्समीपं गत्वा तं भाण्डमूल्यं याचस्व, तेन दीयमानेन भाण्डमूल्येन त्वमपि त्वत्पूर्वजा इव वाणिज्यं कुर्विति। तच्छ्रुत्वा तथेति कनकदत्ते विशालाखिलसमीपं गतवति, स वाणिक्कंचन वणिक्पुत्रमवदत् हे दुराचार! भूतले

योऽयं गतजीवितो मूषको दृश्यते, तेनापि पण्येन कुशलो धनमर्जयति, तव पुनर्मया बहवो दीनारा दत्ता भवन्ति, तद्वृद्धिस्तावत्तिष्ठतु, मूलधनमपि त्वया न रक्षितमिति । एवं विशालाक्षिलोक्ताम्येतानि वाक्यानि श्रुत्वा कनकदत्तस्तमवोचत्, वणिकश्रेष्ठ, अहमिमं मूषकं त्वत्तो भाण्डमूल्यार्थं गृह्णामीति । एवमुक्त्वा पत्रिकायां स्वस्य नामादिकं लिखित्वा तां तस्मै दत्वा मृतमूषकमग्रहीत् । तत्रस्थो वणिक्पुत्रस्तं दृष्ट्वा जहास ॥

ततः कनकदत्तः कस्मैचिद्विडालपोषकाय चणकाञ्जलियुग्मेण मूल्येन तं मूषकं व्यक्रैष्ट । अथ तांश्चणकान् भृष्टान् कृत्वा एकं शीतलास्वादुसलिलपूर्णं कलशं भृष्टचणकांश्चादाय नगराद्बहिर्गत्वा चत्वरे कस्यचिद्वृक्षस्य छायामुपविश्य श्रान्तागताय काष्ठभारिकसङ्घाय तांश्चणकान् शीतलं जलं च सादरं प्रायच्छत् । तेन प्रीतः एकैकः काष्ठिकः द्वे द्वे काष्ठे कनकदत्तायादात् । स तानि काष्ठानि नीत्वा आपणे विक्रीय तैर्लब्धेन मूल्येन काष्ठिकेभ्यः काष्ठानि क्रीत्वा पूर्ववत्तान्यापणे विक्रीणानः क्रमेण कतिपयदिवसाभ्यन्तर एव सकलान्यपि काष्ठानि काष्ठिकेभ्योऽक्रीणात् । अथाकस्मादतिवृष्ट्या दिनत्रयं काष्ठिकेषु वनात्काष्ठान्याहर्तुमशक्तेषु, कनकदत्तः स्ववशे स्थि-

तानि काष्ठानि बहुभी रूपकैर्विक्रीय तैरापणं कृत्वा वाणिज्यं कुर्वन्निजकौशलेनाधिकं धनमार्जयत् । ततः सौवर्णं मूषकं कारयित्वा विशालाक्षिलायादात् । स तं दृष्ट्वा तस्य बुद्धिकौशलमभिनन्द्य तस्मै स्वसुतां दत्वा विवाहमकारयत् । एवं मितव्ययिनः कुशला अल्पमूलधनेनापि बहु धनमार्जयन्ति ॥

२२ अगस्त १९२२

## ५२. नकुलमूषकमार्जारोलूकाः ॥

---

पुरा विदिशानगरीबाह्ये महान्न्यग्रोधोऽभूत् । तस्मिन्महातरौ नकुलोलूकमार्जारमूषकाश्चत्वारः प्राणिनः पृथगालया वसन्ति स्म । तेषु नकुलमूषकौ तस्य तरोर्मूले भिन्ने भिन्ने बिले न्यवसताम् । मार्जारस्तस्य मध्यभागस्थे महति कोटरे न्यवसत् । उलूकस्तु शिरोभागे लतालयेऽनन्यलभ्ये । एतेषु मूषकस्त्रिभिर्वध्यः, मार्जारेणापरे त्रेया वध्याः । नकुलमूषकौ मार्जारभयादाहाराय निशि परिभ्रेमतुः । उलूकः स्वभावेनैव रात्रौ परिबभ्राम । मार्जारस्तु निर्भयो दिवा रात्रौ च । तत्रासन्ने यवक्षेत्रे मार्जारः सदा मूषकालिप्सया, अन्येऽपि त्रयः स्वकाले अन्ना-

भिक्षाकाङ्क्षया गच्छन्तस्तस्थुः ॥

अथैकदा कश्चन लुब्धकश्चण्डालस्तत्रागत्य तत्क्षेत्रगामिनीं मार्जारपदश्रेणीं दृष्ट्वा तद्वधाय क्षेत्रमभितः पाशान्बद्ध्वा ततो ययौ । रात्रौ मार्जारो मूषकजिघांसया समेत्य क्षेत्रं प्रविष्टः पाशैरबध्यत । मूषकोऽप्याहारार्थी तत्र निभृतागतः पाशबद्धं मार्जारं वीक्ष्य जहर्ष ननर्त च । ततः स मूषकस्तत्क्षेत्रं दूरादेकेन वर्त्मना यावद्विशत्, तावदुलूकनकुलावपि तत्रायातौ । तौ बद्धं मार्जारं दृष्ट्वा मूषकं लब्धुमैच्छताम् । मूषकोऽपि दूरात्तौ दृष्ट्वाऽतिविग्नो व्यचिन्तयत्, नकुलोलूकभयप्रदं मार्जारं यदि संश्रये, बद्धोऽपि स शत्रुर्मामेकप्रहारेण मारयेत्, यदि न संश्रये, नकुलोलूकौ मार्जाराद्दूरगं मां हन्यातात्, तच्छत्रुसङ्कटगतः क गच्छामि, किं करोमीति । एवं विचिन्त्य हन्तापद्गतोऽहमात्मत्राणाय मार्जारमेव श्रयामि । स मां जातु पाशच्छेदोपयोगिनं रक्षेत् इत्येवं पुनरालोच्य मूषकः शनैर्मार्जारं गत्वाब्रवीत्, बद्धे त्वय्यतिदुःखं मम ; तत्ते पाशमहं छिनद्मि, सहवासादृजूनां रिपुष्वपि स्नेहो जायते, किं तु तव चित्तमजानतो मम नास्ति विश्वास इति । मार्जारस्तच्छ्रुत्वाऽवोचत्, भद्र, विश्वस्यतां त्वया, अद्य प्रभृति प्राणप्रदायको भवान्मित्रं ममेति ।

तदाकर्ण्य मार्जारोत्सङ्गं मूषकः शिश्रिये । तद्दृष्ट्वा नकुलोलूकौ निराशौ ततो ययतुः । ततः पाशपीडितो मार्जारो मूषकं जगाद, मित्र गतप्राया निशा तद्द्रुतं मे पाशं छिन्धीति । मूषको लुब्धकागमनोन्मुखो मृषा कटकटायमानैर्दशनैः शनैश्छिन्दन् विलम्बमकरोत् । क्षणात्प्रभातायां रजन्याम्, लुब्धके निकटागते, मार्जारे अर्थयमाने, मूषको द्राक् पाशांश्चिच्छेद । ततश्छिन्ने पाशे मार्जारे लुब्धकत्रासाद्विद्रुते, मूषको मृत्युमुक्तः पलाय्य बिलं प्राविशत् । पुनर्मार्जारेणाहूतः स्वस्थानान्नाचलत्, किं त्ववोचत्, कालविशेषे ह्यरिर्मित्रं जायते न सर्वदेति । एवं तिरश्चापि मूषकेण बहुभ्यः शत्रुभ्यः प्रज्ञया आत्मा रक्षितः ॥ २४ अगस्त १९३२

## ५३. कैलासगामी मूर्खः ॥

---*---

कश्चिन्मठे बहूनां मुग्धानां मुख्यो मुग्धः कश्चनासीत् । स जातु केनचिद्वाच्यमानात्पुराणात्तटाककर्तुरमुत्र महत्फलमश्रौषीत् । ततः स धनसंपूर्णो निजान्मठान्नातिदूरे विपुलं सलिलपूरितं तटाकं

कारयामास। एकदा स मुग्धाग्रणीस्तं तटाकं द्रष्टुं गतः केनाप्युत्पाटितं तस्य तटं व्यलोकयत् । स तथैवान्येद्युरागत्य तस्य तटाकस्यान्यत्तटमुत्खातं दृष्ट्वा सोद्वेगः समचिन्तयत्, प्रातः प्रभातादारभ्य इहैव वासरं स्थापयामि, द्रक्ष्यामि तं य एवं करोतीति । एवं विचिन्त्य अन्येद्युः प्रगे यावदेत्यास्ते, तावत्तत्र दिवोऽवतीर्य शृङ्गाभ्यां तटं खनन्तं वृषभं ददर्श । स तं दृष्ट्वा दिव्योऽयं वृषभः, तत्किममुना सह न दिवं यामीति विचिन्त्य तस्य वृषभस्य समीपमुपेत्य तस्य पुच्छं हस्ताभ्यां दृढमग्रहीत् । ततः स भगवान् वृषभः पुच्छाग्रलग्नं तं मुग्धमुत्क्षिप्य क्षणात्स्वं धाम कैलासं निनाय । स तत्र दिव्यानि भक्ष्याणि मोदकादीन्यवाप्य भुञ्जानः कतिचिद्दिनानि सुखं न्यवसत् ॥

अथैकदा मुग्धाग्रणीर्गतागतानि कुर्वाणं तं महा वृषभं विलोक्य दैवेन मोहितो मनस्यचिन्तयत्, वृषपुच्छाग्रलग्नो गच्छामि, पश्यामि बान्धवान्, अद्भुतमिदं तेभ्यः कथयित्वा पुनरहं तथैवैष्यामीति। एवं संचिन्त्य वृषभमुपेत्य गच्छतस्तस्य पुच्छमालम्ब्य भुवस्तलमगात् । अथ मठं प्राप्तस्तत्र स्थितैरन्यैर्मुग्धैराश्लिष्य क्व गतोऽसीति पृष्टस्तान् स्ववृत्तान्तं शशंस । ततस्ते सर्वे श्रुताश्चर्यास्तं प्रार्थयन्त,

प्रसीद, नय तत्रास्मानपि, भोजय मोदकानिति । स तथेत्युक्त्वा परदिने तान् तटाकोपान्तमनयत् । क्षणात्परं वृषस्तत्राययौ । तस्य लाङ्गूलं मुख्यो मुग्धः पाणिद्वयेन जग्राह । तस्य चरणावन्योऽगृह्णात् । तस्यापि चेतरः । एवमन्योन्याश्लिष्टैस्तैर्मुग्धैर्यावच्छृङ्खला रचिता तावत्स वृषो जवादुत्पपात नभः । लाङ्गूलालम्बि मुग्धके वृषे याति, दैवयोगादेको मुग्धो मुग्धमुख्यं पप्रच्छ, कियत्प्रमाणा मोदका भवता भक्षिता इति । तदाकर्ण्य स मुग्धनायको भ्रष्टानुसन्धानो वृषपुच्छं विमुच्य संश्लिष्टौ पद्माकारौ करौ कृत्वा, इयत्प्रमाणा इत्याशु दर्शयन् यावत्तान् प्रत्यवोचत्, तावत्स चान्येऽपि ते सर्वे खान्निपत्य विपेदिरे । वृषभः कैलासं प्रायात् ॥



## ५४. सुहृदौ भल्लूकश्च ॥

एकदा सुहृदौ कौचिद्ग्रामं जिगमिषू पथि ।
गच्छतो रहितं किंचित्संभवेदावयोर्यदि ॥ १ ॥

आवाभ्यां प्रतिपत्तव्या परस्परसहायता ।
इत्येवं तावकुरुतां समयं पुरुषौ मिथः ॥ २ ॥

आजगाम तयोरेवं गच्छतोः कृतसंविदोः ।
अग्रतः कोऽपि भल्लूको गुल्मान्निर्गत्य सत्वरम् ॥

तं दृष्ट्वा तु तयोरेकः पुरुषो लघुविग्रहः ।
वृक्षं कंचित्समारुह्य तस्थौ गूढकलेवरः ॥ ४ ॥

अपरस्तु महाकायो मनस्यालोचयत्तदा ।
न सामर्थ्यं ममैकस्य पथि भल्लूकनिग्रहे ॥ ५ ॥

ऋक्षो नरं गतप्राणं न कदाचिदपि स्पृशेत् ।
इत्येषा लौकिकी वार्ता मया मातुः श्रुता पुरा ॥

तदहं मृतवद्भूतं इत्यालोच्य स बुद्धिमान् ।
श्वासं संस्तभ्य शेते स्म हस्तौ पादौ प्रसार्य च ॥

ऋक्षस्तु तमुपागत्य जघ्रावङ्गानि सर्वशः ।
श्वासाभावान्मृतं मत्वा हिंसां कामपि नाकरोत् ॥

ऋक्षो वनमगाहिष्ट ततो वृक्षस्थपूरुषः ।
अवरुह्य तरोस्तस्मात्समागत्येतरान्तिकम् ॥ ९ ॥

पप्रच्छ सस्मितं मित्र भल्लूकस्त्वां किमब्रवीत् ।
यतो मयैष दृष्टोऽभून्निधाय वदनं स्वकम् ॥ १० ॥

निकटे तव कर्णस्य कथयन्निव किंचन ।
तं परः प्रत्युवाचेदमृक्षो मां नान्यदब्रवीत् ॥ ११ ॥

इतःपरमपीदृक्षे आत्मे स्वार्थपरे नरे ।
विश्वासो नैव कर्तव्य इत्येतन्मात्रमीरितम् ॥१२॥

तूष्णीमासीत्स तच्छ्रुत्वा लज्जावनतमस्तकः ।
आपद्धि निकषग्रावा मित्रतत्त्वपरीक्षणे ॥ १३ ॥

३० अगस्त १९

## ५५. लोहाः सुवर्णं च ॥

लोहाः प्रायशः कठिनाः भास्वरा भारवन्तश्च । सर्वेऽपि लोहा वह्निसंयोगे सति द्रवन्ति । परं तु केचन धातवो द्रवीभवितुमधिकमग्नितापमपेक्षन्ते । लोहाश्च पार्थिवांशैः शिलावयवैश्च समाकीर्णा भूमौ वर्तन्ते । खनित्रादिना भूमिं खनित्वा तान्बहिर्नयन्ति । बहिर्नीताः अग्न्यादिसंस्कृताः शुद्धा भवन्ति । शुद्ध्यनन्तरमेव ते स्वस्वरूपं भजन्ते । संस्कारात्पूर्वं पाषाणादय इव दृश्येरन् । तदा तान्दृष्ट्वा एते लोहा इति न वयं ज्ञातुं शक्नुमः ॥

लोहैरनेके सोपयोगाः पदार्थाः क्रियन्ते । लोहा अनेकविधाः सन्ति । तेषु सुवर्णम्, रजतम्, अयः, ताम्रम्, पित्तलम्, सीसं च मुख्यानि । तेष्वपीतरा-

पेक्षया सुरूपतया सुवर्णमेव उत्तमो धातुः । सुवर्णं पीतं गुरु सीसमिवातिमृदु च । तद्धघणादिना अभिहन्यमानं अतनुपत्ररूपताम्, आकृष्यमाणं सूक्ष्मसूत्रतां चाधिगच्छति । एकव्रीहिपरिमितेन सुवर्णेन त्रिंशत्पाददीर्घा तन्त्री आक्रष्टुं शक्यते । वाय्वालोकादिसंसृष्टमपि ताम्रवत्सुवर्णं न मलिनी भवति । सुवर्णेन वलयकुण्डलाङ्गुलीयाद्यनेकविधान्याभरणानि पात्रादीनि च कुर्वन्ति । दीनारा अपि सुवर्णेन रच्यन्ते । दीनारान्कर्तुं सुवर्णे द्वादशांशं ताम्रं संयोजयन्ति । ताम्रसंयुक्तमेव सुवर्णं कठिनतामापद्यते । अन्यथा शुद्धसुवर्णनिर्मिता दीनाराभरणादयः क्षयेयुः ॥

सुवर्णरसेन रजतादिनिर्मितान्याभरणानि भाजनानि च लिम्पन्ति । सुवर्णरसलिप्तानि वस्तूनि सुवर्णमयकल्पान्येव दृश्यन्ते । तादृशवस्तुषु लिप्तं सुवर्णं चिरकालं स्थायिभवति । सुवर्णपरीक्षिकाः सुवर्णं निकषे घर्षित्वा निकषपतितां सुवर्णरेखां दृष्ट्वा सुवर्णस्य शुद्धतां जानीयुः । उज्ज्वलतया दुर्लभतया च सुवर्णं बहुमूल्यम् ॥

सुवर्णं भूमौ बहुषु देशेषु लभ्यते । नदीनां मध्यवर्तिनीषु सिकतासु स्तोकशः, खनिषु बाहुल्येन लभ्यते । खनिषु सुवर्णाणुगर्भाः बृहदुपलाः सन्ति ।

तान्बहिर्नीत्वा चूर्णीकृत्य पात्रस्थापितान् प्रवहज्जले निक्षिपन्ति । जलप्रवाहः सुवर्णाणून् गुरुतया विसृज्य पाषाणाणूनपोहति ॥

१ सितंबर १९

## ५९. भारिकः सिद्धदत्तः ॥

प्राक्पाटलिपुत्रके पुरे सिद्धदत्ताभिधः कश्चन भारिको बभूव । स प्रत्यहं काष्ठभारं वनादानीयापणे विक्रीय ततो लब्धेन मूल्येन कुटुम्बं पुष्णन्नवर्तत । एकदा स वनं दूरे गतो दैवात्तत्रस्थांश्चतुरो यक्षान् दिव्याभरणवाससो ददर्श । ते यक्षास्तं भीतं वीक्ष्य प्रीत्या तं पृष्ट्वा कुटुम्बिनं दरिद्रं बुद्ध्वा समुत्पन्नकृपा बभाषिरे, भद्र त्वामिहास्मदन्तिके कर्मकरस्तिष्ठ, वयं तव गृहनिर्वाहमक्लेशं करिष्याम इति । तच्छ्रुत्वा सिद्धदत्तस्तथेति तदन्तिके तस्थौ । तेषां कृत्स्नां स्नानादिपरिचर्यां चकार । समागते भोजनसमये ते यक्षास्तं जगदुः, भद्र! आहारमस्मभ्यममुतो घटाद्देहीति । एवमुक्त्वा एकं घटं तस्मै दर्शयामासुः । स तं घटमन्तःशून्यं विलोक्य व्यलम्बत । तदा ते गुह्यकाः सस्मिताननाः भूयस्तमाहुः, सिद्धदत्त,

त्वं न वेत्सि, घटान्तस्तव हस्तं क्षिप, यथेच्छं सर्वं लप्स्यसे, यदसौ घटः काम्यप्रद इति । तदाकर्ण्य स घटान्तः पाणिं प्रवेश्य कामितमन्नपानादि दृष्ट्वा सविस्मयस्तेभ्य आहारादिकं दत्त्वा स्वयमपि बुभुजे । सिद्धदत्तः कुटुम्बचिन्तार्तस्तान् यक्षान् एवमन्वहं भक्त्या भीत्या च परिचरंस्तदन्तिके तस्थौ । कुटुम्बं च दुःखार्तं गुह्यकैः स्वप्नादेशेनाश्वासितं तत्प्रसादलब्धाहारादिवस्तुजातं सुखमवर्तत ॥

एवं मासमात्रमतिक्रान्तम् । ततस्ते यक्षाः सिद्धदत्तमभ्यधुः; भद्र तवानया भक्त्या तुष्टाः स्मः, ब्रूहि किं ते दद्म इति । तच्छ्रुत्वा स तान् जगाद, यदि सत्यं तुष्टाः स्थ, तर्हि युष्माभिरयं घटो दीयतामिति ते तमूचुः, त्वं नैनं रक्षितुं शक्ष्यसि, भग्नो भवेद्यदि किमपि न दद्यात्; तदपरं वृणीष्वेति । एवं तैरुक्तोऽपि स मूढो यदापरं नैच्छत्तदा ते तं घटं तस्मै ददुः । हृष्टः स तान्प्रणम्य घटमादाय जवात्स्वगृहं जगाम । तत्र स नन्दितबान्धवः तस्माद्घटाद्भोजनादि लब्ध्वा गुप्त्यर्थं तमन्नभाण्डे निधाय स्वजनैः सह सुखं भुञ्जानोऽतिष्ठत् ॥

अथ जातु स भारमुक्तो भोगान्भुञ्जानः पानमत्तः कुतस्तवैषा भोगश्रीरिति बन्धुभिरपृच्छ्यत । मूढो

गर्वेण तान् व्यक्रमन्नुपगीप्सितार्थदं तं घटं गृहीत्वा नर्तितुं प्रारेभे । नृत्यतस्तस्य मदोद्रेकस्खलद्गतेः स्कन्धात्स घटः पतित्वा भुवि खण्डशो बभूव । तदा भिक्षुस्तो विषण्णः पूर्वावस्थामलभत । एवं दैवाभिभूतानां प्राप्तोऽप्यर्थः पलायते ॥

